# निवेदन

इस पुस्तक के प्रथम संस्करण का प्रकाशन युनिवर्सल प्रेस प्रयाग के अध्यक्ष श्री जयराम भार्गव के यहाँ से हुआ था। किन्तु बड़ी विचित्र और आश्चर्य जनक परिस्थितियों में पड़कर मुझे इस पुस्तक के दूसरे संस्करण का अधिकार साहित्यकार संघ को देना पड़ा।

अभी तक प्रकाशकों और लेखकों के मध्य आर्थिक प्रश्न को लेकर मतभेद सुना जाता है। पर भार्गव जी ने इस पुस्तक में से मेरा नाम ही निकाल दिया। सङ्कलनकर्त्ता को पैसा न देने की उनकी अनोखी सूझ ने ही इसके दूसरे संस्करण का प्रकाशनाधिकार साहित्यकार संघ को देने के लिए मुझे विवश किया।

प्रस्तुत संस्करण के विषय में भी दो शब्द कह देना अनुचित न होगा। इसके प्रथम संस्करण का मुद्रण १६४८ में ज्योतिषप्रकाश प्रेस काशी में हुआ था। मेरी अनुपस्थिति के कारण प्रूफ की भद्दी-भद्दी भूलें रह गयीं। इससे कई स्थलों का अर्थ लगाने में विद्यार्थियों तथा अध्यापकों को बड़ी असुविधा होती थी। इस संस्करण में यथा-सम्भव उन भूलों को दूर किया गया है। विद्यार्थियों के लाभार्थ संक्षिप्त टिप्पणी भी जोड़ दी गयी है। मुझे पूर्ण विश्वास है कि प्रस्तुत संस्करण से विद्यार्थियों का अधिकाधिक लाभ होगा।

अन्त में, प्रूफ देखकर मेरे मित्र श्री पण्डित दयानाथ झा ने प्रेस सम्बन्धी सुविधा देकर व्यवस्थापक श्री पण्डित सरयूप्रसाद पाण्डेय ने तथा इस पुस्तक के छपाने में दौड़धूप करके प्रेस के लिपिक श्री पण्डित वैजनाथ तिवारी ने जो कृपा प्रदर्शित की है, उसके लिए मैं उन्हें धन्यवाद देता हूँ।

रक्षाबन्धन
कवि कुटीर
दारागंज, प्रयाग
२७, ८, ५०

प्रभात मिश्र

# विषय-सूची

## स्तुतिपद्यानि

स जयति सिन्धुरवदनो,
देवो यत्पादपङ्कजस्मरणम् ।
वासरमणिरिव तमसां,
राशिन्नाशयति विघ्नानाम् ॥

करारविन्देन पदारविन्दं,
मुखारविन्दे विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं,
बालं मुकुन्दं मनसा स्मरामि ।

त्रैलोक्यशल्योद्धरणाय सिन्धो-
श्चकार बन्धं मरणं रिपूणाम् ।
पुण्यप्रणामं भुवनाभिरामं,
रामं विरामं विपदामुपासे ।

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥
जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ ।
कामारिं कामतातं वा कञ्चिद्देवं भजामहे ॥

---

## कम्बुग्रीवकथा

अस्ति कस्मिंश्चिज्जलाशये कम्बुग्रीवो नाम कच्छपः। तस्य च सङ्कटविकटनाम्नी मित्रे हंसजातीये परमस्नेह-कोटिमाश्रिते नित्यमेव सरस्तीरमासाद्य तेन सहानेक-देवर्षिमहर्षीणां कथाः कृत्वा अस्तमयवेलायां स्वस्वनीड-संश्रयं कुरुतः। अथ गच्छता कालेन।वृष्टिवशात्सरः शनैः-शनैः शोषमगमत्। ततस्तद्दुःखदुःखितौ तावूचतुः भो मित्र! जम्बालशेषमेतत्सरः सञ्जातम्। तच्छ्रुत्वा कम्बुग्रीव आह—भोः साम्प्रतं नास्त्यस्माकं जीवितव्यं जलाभावात्। तथाप्युपायश्चिन्त्यतामिति।

तदानीयतां काचिद्दृढरज्जुर्लघुकाष्ठं वा। अन्विष्यतां च प्रभूतजलसनाथं सरः, येन मया मध्यप्रदेशे दन्तैर्गृहीते सति युवां कोटिभागयोस्तत्काष्ठं मया सहितं संगृह्य तत्सरो नयथः, तावूचतुः—भो मित्र! एवं करिष्यावः। परं भवता मौनव्रतेन स्थातव्यम्। नो चेत्तव काष्ठात्पातो भविष्यति। तथानुष्ठिते गच्छता कम्बुग्रीवेण अधोभागव्यवस्थितं किञ्चि-त्पुरमालोकितम्। तत्र ये पौरास्ते तथा नीयमानं विलोक्य सविस्मयमिदमूचुः—'अहो चक्राकारं किमपि पक्षिभ्यां नीयते पश्यत-पश्यत' अथ तेषां कोलाहलमाकर्ण्य कम्बुग्रीव आह—'भोः किमेष कोलाहलः' इति वक्तुमना अर्धोक्तिपतितः पौरैःखण्डशः कृतश्च।

---

## वणिक्पुत्रकथा

अस्ति कस्मिंश्चिदधिष्ठाने जीर्णधनो नाम वणिक्पुत्रः स च विभवक्षयाद्देशान्तरगमनमना व्यचिन्तयत्—

तस्य च गृहे लोहभारघटिता पूर्वपुरुषोपार्जिता तुलासीत् ताञ्च कस्यचिच्छ्रेष्ठिनो गृहे निक्षेपभूतां कृत्वा देशान्तरं प्रस्थितः। ततः सुचिरं कालं देशान्तरं यथेच्छया भ्रान्त्वा पुनः स्वपुरमागत्य श्रेष्ठिनमुवाच—'भोःश्रेष्ठिन्! दीयतां मे सा निक्षेपतुला, स आह—'भोः! नास्ति सा त्वदीया तुला। मूषिकैर्भक्षितेति।' जीर्णधन आह—'भोः श्रेष्ठिन्! नास्ति दोषस्ते यदि मूषिकैर्भक्षितेति। ईदृगेवायं संसारः। न किञ्चिदत्र शाश्वतमस्ति। परमहं नद्यां स्नानार्थं गमिष्यामि। तत्त्व-मात्मीयं शिशुमेनं धनदेवनामानं मया सह स्नानोपकरण-हस्तं प्रेषय' इति। सोऽपि चौर्य्यभयात्तस्य शङ्कितः स्व-पुत्रमुवाच 'वत्स! पितृव्योऽयं तव स्नानार्थं यास्यति, तगद्म्यतामनेन सार्धं स्नानोपकरणमादाय' इति।

अथासौ वणिक्शिशुः स्नानोपकरणमादाय प्रहृष्टमना-स्तेनाभ्यागतेन सह प्रस्थितः। तथानुष्ठिते स वणिक् स्नात्वा तं शिशुं नदीगुहायां प्रक्षिप्य तद्द्वारं बृहच्छिलयाच्छाद्य सत्वरं गृहमागतः पृष्ठश्च तेन वणिजा—'भोः अभ्यागत! कथ्यतां कुत्र मे शिशुर्यस्त्वया सह नदीं गतः' इति। स

आह–'नदीतटात् स श्येनेन हृतः' इति। श्रेष्ठ्याह––मिथ्यावादिन्! किं क्वचिच्छ्येनो बालं हर्तुं शक्नोति। तत्समर्पय मे सुतम्। अन्यथा राजकुले निवेदयिष्यामि' इति। स आह–'भोः सत्यवादिन्! यथा श्येनो बालं न नयति तथा मूषिकोऽपि लोहभारघटितां तुलां न भक्षयति, तदर्पय मे तुलाम्, यदि दारकेण प्रयोजनम्।' एवं तौ विवदमानौ द्वावपि राजकुलं गतौ। तत्र श्रेष्ठी तारस्वरेण प्रोवाच––'भोः अब्रह्मण्यमब्रह्मण्यम्। मम शिशुरनेन चौरेणापहृतः, अथ धर्माधिकारिणस्तमूचुः—'भोः! समर्प्यतां श्रेष्ठिसुतः? स आह–किं करोमि। पश्यतो मे नदीतटाच्छ्येनेनापहृतः शिशुः।' तच्छ्रुत्वा ते प्रोचुः—भोः न सत्यमभिहितं भवता। किं श्येनः शिशुं हर्तुं समर्थो भवति? स आह–भोः' भोः श्रूयतां मद्वचः––

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः।

राजस्तत्र हरेच्छ्येनो बालकं नात्र संशयः॥

ते प्रोचुः—'कथमेतत्' ततः श्रेष्ठी सभ्यानामग्रे आदितः सर्ववृत्तान्तं निवेदयामास। ततस्तैर्विहस्य द्वावपि तौ परस्परं सम्बोध्य तुलाशिशुप्रदानेन सन्तोषितौ।

## विप्रमनोरथपूर्तिकथा

पुनरपि राजा यावत् अन्यपुत्तलिकामस्तके पादपद्मं निदधाति, तावत् सा पुत्तलिका तथैव मनुष्यवाचा राजानमब्रवीत्,---भो राजन् ! विक्रमस्य शौर्य्योदार्य्यसत्त्वादिकसादृश्यं यदि विद्यते, "तर्हि अस्मिन् सिंहासने समुपविश" । भोजराजो वदतिस्म भोः पुत्तलिके ! कथय तस्य विक्रमस्य शौर्य्योदार्य्यादिकथा" ।

सा कथयति,---'भो राजन् ! श्रूयताम्,---

विक्रमादित्यः राज्यं पालयन् एकदा चारानाहूयाऽब्रवीत्, भो दूताः ! भवन्तः पृथ्वीपरिभ्रमणं कुर्व्वन्तः, यत्र यत्र विस्मयकरदृश्यं तीर्थविशेषञ्च विलोकयन्तु, तन्मम निवेदयन्तु । अहं तत्र गमिष्यामि' । एवं काले गते एकदा देशान्तरं परिभ्रमन्नागतः कश्चित् दूतो राजानमब्रवीत्,---भो राजन् ! चित्रकूटपर्वतनिकटे तपोवनमध्ये अतिमनोहरो देवालयोऽस्ति । तत्र पर्वतोच्चस्थानात् विमला जलधारा पतति । तत्र स्नानं यदि क्रियते, सर्वेषां महापापानां क्षयो भवति, यस्तु महापापं करोति तस्याङ्गादतीवकृष्णमुदकं निःसरति । यस्तत्र स्नानं करोति, स पुण्यपुरुषः । अन्यच्च तत्रकश्चिद् ब्राह्मणः महति होमकुण्डे हवनं करोति, तस्य कियन्ति वर्षाणि अतीतानि इति न ज्ञायते । प्रतिदिनं

कुण्डाद् बहिः स्थापितं भस्म, पर्वताकारमस्ति । स ब्राह्मणः केनाऽपि सह न सम्भाषते। एवमतिविचित्रतरं स्थानं दृष्टम्।

तच्छ्रुत्वा स राजा एकाकी तेन सह तत्स्थानं गत्वा, परमानन्दं प्राप्तोऽवादीत्,--अहो! अतिपवित्रमेतत्स्थानम्। अत्र साक्षाज्जगदम्बिका निवसति । एतत्स्थानं दृष्ट्वा मनो मे विमलं जातम्" इत्युक्त्वा तत्र निर्झरजले स्नानं विधाय देवतां नमस्कृत्य, यत्र ब्राह्मणो हवनं करोति, तत्र गत्वा ब्राह्मणमवोचत्—"भो ब्राह्मण! हवनमारभ्य कति वर्षाणि जातानि?" ब्राह्मणेनोक्तं होमं कुर्वतो मे वर्षशतमभूत्,तथापि देवता प्रसन्ना नाऽभवत्"। तच्छ्रुत्वा राजा स्वयं देवतां स्मृत्वा होमकुण्डे आहुतिमक्षिपत् । तदाऽपि देवी प्रसन्ना नाऽभूत् । तदनन्तरं राजा स्वशिरः दास्यामि, इति बुद्ध्या यावत् कण्ठे खड्गं सन्दधाति, तावदन्तराले देवता खड्गं धृत्वा अवादीत्—"भो राजन्। प्रसन्नाऽस्मि, वरं वृणीष्व"। राज्ञा उक्तं,—भो देवी! यद्-ब्राह्मणोऽयं बहुकालं हवनं करोति, नापराध्यति कस्मैचित्, नचाऽपि नियमात् स्खलितः,तथाऽपि अस्मिन् किमर्थं न प्रसन्ना भवसि ? मम एव वा कः तथाविधः अर्हणाप्रकारः, येन शीघ्रं प्रसन्नाऽसि?" तयोक्तं भो राजन्! अस्य चेतसि भावो नास्ति, अतः प्रसन्ना न भवामि। उक्तञ्च।

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ।<br>
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥

न काष्ठे विद्यते देवो न पाषाणे न मृण्मये ।
भावे हि विद्यते देवस्तस्माद्भावो हि कारणम् ॥

राजा अवदत्—यदि मम प्रसन्ना जाताऽसि, तर्हि अस्य ब्राह्मणस्य "मनोरथान् पूरय" । साऽब्रवीत्—भो राजन् ! परोपकारी महाद्रुम इव स्वदेहकष्टं सहित्वा परिश्रमोच्छेदं करोषि ! उक्तञ्च ।

छायामन्यस्य कुर्वन्ति स्वयं तिष्ठन्ति चातपे ।
फलन्ति हि परार्थे च सत्यमेते महद्रुमाः ॥

परोपकाराय वहन्ति नद्यः परोपकाराय दुहन्ति गावः ।
परोपकाराय फलन्ति वृक्षाः परोपकाराय शरीरमेतत् ॥

एवं राजानं स्तुत्वा ब्राह्मणस्य मनोरथं पूरयतिस्म । राजाऽपि स्वपुरीमगात्" ।

इमां कथां कथयित्वा पुत्तलिका भोजमवदत्—राजन् ! एवं विधं धैर्य्यं विद्यते चेत् तर्ह्यस्मिन् सिंहासने समुपविश राजा तूष्णीमासीत् ।

---

## सिंहदिलीपयोः सम्वादः

गुरोराज्ञां स्वीकृत्य, सम्राट् दिलीपः, प्रातःकाले समुत्थाय, पीतप्रतिबद्धवत्साम्, वशिष्ठधेनुं नन्दिनीं वनाय मुमोच । 'छायेव तां भूपतिरन्वगच्छत्'

एवं आस्वादवद्भिः तृणानां कवलैः कण्डूयनैः दंश-निवारणैः स्वच्छन्दगमनैश्च स तां समाराधयामास ।

अन्येद्यु:—आत्मानुचरस्य भावं जिज्ञासमाना नन्दिनी गङ्गाप्रातान्तविरूढशष्पां हिमालयस्य गुहां प्रविवेश । सा हिंस्रैर्मनसाऽपि दुष्प्रधर्षा इति नृपः पर्वतस्य सुषमाविलोकने संलीनोऽभवत् । अपरतश्च गुहाशयः सिंहो हठात् नन्दिनीमाक्रमत् । ततश्च धेन्वाः कातरं दीनदीनमाक्रन्दनमाकर्ण्य, राजा तत्र दृष्टिं निचिक्षेप, नन्दिन्या उपरिस्थितं सिंहमालोक्य विस्मयक्रोधाविष्टो राजा सत्वरं तूणीरात् शरं निष्कासयितुं आयतत, परं तस्य दक्षिणो हस्तः सायकपुङ्ख एव चित्रलिखित इव तस्थे ।

ततो हस्तावरोधेन क्रोधाभिसृतं चकित-चकितं राजानमत्यन्तं विस्मापयन् सिंहो मनुष्यभाषायां तमुवाच—

"हे राजन् ! परिश्रमं मा कुरु । मयि तव बाणप्रक्षेपणप्रयासो व्यर्थ एव । अहं खलु कुम्भोदरनामा शिवस्य गणोऽस्मि । शिवो मत्पृष्ठे पादन्यासं कृत्वा वृषभमारोहति यं खलु पुरस्तात् देवदारुवृक्षमवलोकयसि, असौ शिवेन पुत्र इव स्वीकृतः, पार्वत्या स्वयं जलसेकेनाऽयं संवर्धितः एकदा कपोलं कण्डूयमानेन वन्येन गजेन अस्य त्वक् समुत्पाटिता । तदा पार्वती नितरामेनं स्वपुत्रमिव शुशोच । तत एव कालादारभ्य शिवेन सिंहत्वं विधाय अहमस्य,

रक्षायै पर्वतगुहायां नियुक्तः। अहमङ्कागतसत्त्ववृत्तिरस्मि। तदियं धेनुर्बहुकालानन्तरमत्र समागता मम पारणा भविष्यति। अतस्त्वं लज्जां विहाय निवर्तस्व। नात्र ते परिवादः। अत्र दैवकार्य्ये शस्त्राणां पौरुषस्य च प्रभावो नास्ति।"

इति सिंहस्य वचनं श्रुत्वा राजा लज्जां तत्याज। जगाद च "हे सिंह! यद्यपि मदुक्तं हास्यं भवेत् तथापि वाच्यम्। यतो भवान् सर्वेषां हृदयस्याभिप्रायं जानाति, अतो वदामि। सः खलु शिवो मे मान्यः, इदमपि च गुरोर्धनं नेत्राणां समक्षं विनश्यन्नोपेक्षणीयं भवति, अतस्त्वमिमां वराकीं त्यज। मम शरीरेण स्वशरीरवृत्तिं निर्वर्तयस्व। तत्स्थाने मामेव भुङ्क्ष्व।"

ततः सिंहः प्रत्युवाच—

"हे नृप! एकातपत्रं जगतः प्रभुत्वम्, नवं वयः, इदं सुन्दरं शरीरञ्चेति, एकस्या धेनोः कृते एतत्सर्वं त्यक्तुमिच्छन् भवान् विवेकविकलोऽसीति प्रतीयते। त्वं हि कोटिशः घटोध्नीः गाः दत्त्वा अस्याः क्षतिं पूरयिष्यसि। परन्तु त्वं जगतामधीश्वरः। अतः तव विनाशे जगतः सर्वस्वं विनष्टं स्यात्। तत्स्वदेहं रक्ष। इमां जहीहि।"

ततो नन्दिन्या कातरतया निरीक्ष्यमाणो दिलीपः पुनरुवाच—

"अयि। मृगाधिराज! इयं खलु न सामान्या गाः।

इयं कामधेनोः सुता कामधेनुरेव । न साधारणा हिंस्रा एनामाक्रमितुं शक्नुवन्ति । त्वया तु शिव-प्रभावेणास्यां प्रहृतम् । तदहमस्या निष्क्रयेण स्वदेहं ददामि । एवं तव पारणा विहता न स्यात्, मुनेश्च क्रियार्थो न लुप्तः स्यात् । भवानपि जानाति यत् रक्षकः स्वयमक्षतः स्वामिनोऽग्रे रक्ष्यं विनाश्य न स्थातुमर्हति । अतः त्वमस्याः परित्यागे मम प्रार्थनां स्वीकुरु ।

इत्युक्त्वा दिलीप आमिषस्य पिण्डमिव स्वदेहं हर्यये समुपानयत् । ततश्च तस्य अवाङ्मुखस्योपरि विद्याधर-हस्तमुक्ता पुष्प-वृष्टिः पपात ।

ततश्च—

"उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितो भूपतिः जननीमिव स्वां गामग्रतः ददर्श न सिंहम् ।"

तदनन्तरं प्रीता नन्दिनी तस्मै वरप्रदानमकरोत् । कृतार्थो भूपतिः तया सह वनान्तादाश्रममागत्य गुरवे सुदक्षिणायै च वरप्रदानवृत्तान्तं निवेद्यामन्दानन्दमविन्दत ।

---

## शरद्वर्णनम्

काशांशुका विकचपद्ममनोज्ञवक्त्रा

सोन्मादहंसरवनूपुरनादरम्या ।

आपक्वशालिरुचिरा तनुगात्रयष्टिः

प्राप्ता शरन्नववधूरिव रूपरम्या ॥

काशैर्मही शिशिरदीधितिना रजन्यो
हंसैर्जलानि सरितां कुमुदैः सरांसि ।
सप्तच्छदैः कुसुमभारनतैर्वनान्ताः
शुक्लीकृतान्युपवनानि च मालतीभिः ॥

व्योम क्वचिद्रजतशङ्खमृणालगौरै—
स्त्यक्ताम्बुभिर्लघुतया शतशः प्रयातैः ।
संलक्ष्यते पवनवेगचलैः पयोदै
राजेव चामरवरैरुपवीज्यमानः

भिन्नाञ्जनप्रचयकान्ति नभो मनोज्ञं
बन्धूकपुष्परचितारुणता च भूमिः ।
वप्राश्च चारुकमलावृतभूमिभागाः
प्रोत्कण्ठयन्ति न मनो भुवि कस्य यूनः ॥

मन्दानिलाकुलितचारुतराग्रशाखः
पुष्पोद्गमप्रचयकोमलपल्लवाग्रः ।
मत्तद्विरेफपरिपीतमधुप्रसेक—
श्चित्तं विदारयति कस्य न कोविदारः ॥

आकम्पयन्फलभरानतशालिजाला-
नानर्तयंस्तरुवरान्कुसुमावनम्रान् ।
उत्फुल्लपङ्कजवनां नलिनीं विधुन्व—
न्यूनां मनश्चलयति प्रसभं नभस्वान् ॥

मोन्मादहंसमिथुनैरुपशोभितानि
स्वच्छप्रफुल्लकमलोत्पलभूषितानि ।
मन्दप्रभातपवनोद्गतवीचिमाला—
न्युत्कण्ठयन्ति सहसा हृदयं सरांसि ॥

नष्टं धनुर्बलभिदो जलदोदरेषु
सौदामिनी स्फुरति नाद्य वियत्पताका ।
धुन्वन्ति पक्षपवनैर्न नभो बलाकाः
पश्यन्ति नोन्नतमुखा गगनं मयूराः

नृत्यप्रयोगऽरहिताञ्छिखिनो विहाय
हंसानुपैति मदनो मधुरप्रगीतान् ।
मुक्त्वा कदम्बकुटजार्जुनसर्जनीपा—
न्सप्तच्छदानुपगता कुसुमोद्गमश्रीः ॥

शेफालिकाकुसुमगन्धमनोहराणि
स्वस्थस्थिताण्डजकुलप्रतिनादितानि ।
पर्यन्तसंस्थितमृगीनयनोत्पलानि
प्रोत्कण्ठयन्त्युपवनानि मनांसि पुंसाम् ॥

कह्लारपत्रकुमुदानि मुहुर्विधुन्वं-
स्तत्संगमादधिकशीतलतामुपेतः ।
उत्कण्ठयत्यतितरां पवनः प्रभाते
पत्रान्तलग्नतुहिनाम्बुविधूयमानः ॥

संपन्नशालिनिचयावृतभूतलानि
स्वस्थस्थितप्रचुरगोकुलशोभितानि ।
हंसैः ससारसकुलैः प्रतिनादितानि
सीमान्तराणि जनयन्ति नृणां प्रमोदम् ॥

स्फुटकुमुदचितानां राजहंसस्थितानां
मरकतमणिभासा वारिणा भूषितानाम् ।
श्रियमतिशयरूपां व्योमतोयाशयानाम्
वहति विगतमेघं चन्द्रतारावकीर्णम् ॥

शरदि कुमुदसङ्गाद्वायवो भान्ति शीता
विगतजलदवृन्दा दिग्विभागा मनोज्ञाः
विगतकलुषमम्भः श्यानपङ्का धरित्री
विमलकिरणचन्द्रं व्योम ताराविचित्रम् ॥

---

## रक्तमुखवानरकथा

अस्ति कस्मिंश्चित् समुद्रोपकण्ठे महान् जम्बूपादपः । तत्र च रक्तमुखो नाम वानरः प्रतिवसतिस्म । तत्र च तस्य तरोरधः कदाचित्करालमुखो नाम मकरः समुद्रसलिलान्निष्क्रम्य तीरोपान्ते न्यविशत् । ततश्च रक्तमुखेन स प्रोक्तः भो भवान् समस्यागतोऽतिथिः । तद्भक्षयतु मया दत्तान्यमृततुल्यानि जम्बूफलानि ।

एवमुक्त्वा तस्मै जम्बूफलानि ददौ । सोऽपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखमनुभूय भूयोऽपि

स्वभवनमगमत् । एवं नित्यमेव तौ वानरमकरौ जम्बूच्छाया-स्थितौ सुभाषितगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः । सोऽपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्व-पत्न्याः प्रयच्छति । अथान्यतमे दिवसे तया स पृष्टः—नाथ ! क एवं विधान्यमृतफलानि प्राप्नोषि । स आह, भद्रे ! ममास्ति परमसुहृद्रक्तमुखो नाम वानरः, स प्रीतिपूर्वमिमानि फलानि प्रयच्छति । अथ तयाभिहितं; यः सदैवामृतप्रायाणी-दृशानि फलानि भक्षयति तस्य हृदयमसृतमयं भविष्यति । तद्यदि मया भार्यया ते प्रयोजनं ततस्तस्य हृदयं मह्यं प्रयच्छ, येन तद्भक्षयित्वा जरामरणरहिता भवामि । स आह भद्रे ! मा मैवं वद, यतः स प्रतिपन्नोऽस्माकं भ्राता, अपर फलदाता, ततो व्यापादयितुं न शक्यते, तत्त्यजैनं मिथ्या-ग्रहम् ।

अथ मकर्याह त्वया कदाचिदपि मम वचनं नान्यथा कृतम्, तदधुना किन्न करोषि ? तत्किं बहुना, यदि तस्य हृदयं न भक्षयामि तन्मया प्रायोपवेशनं कृतं विद्धि । एवं तस्यास्तन्निश्चयं ज्ञात्वा चिन्ताव्याकुलितहृदयः किं करोमि कथं स मे वध्यो भवतीति विचिन्त्य वानरपार्श्वमगमत् । वानरोऽपि चिरायान्तं तं सोद्वेगमवलोक्य प्रोवाच । भो मित्र ! किमद्य चिरवेलायां समायातोऽसि कस्मात्साह्लादं नालपसि, न सुभाषितानि पठसि । स आह, मित्र ! अहं

तव भ्रातृजायया निष्ठुरतरैर्वाक्यैरभिहितः । "भो कृतघ्न ! मा मे त्वं स्वमुखं दर्शय, यतस्त्वं प्रतिदिनं मित्रमुपजीवसि नच तस्य पुनः प्रत्युपकारं गृहदर्शनमात्रेणाऽपि करोषि । तत्त्वं मम देवरं गृहीत्वाद्य प्रत्युपकारार्थं गृहमानय । नो चेत्त्वया सह मे परलोके दर्शनम्, तदहं तथैवं प्रोक्तस्तव सकाससमागतः, तदद्य तया सह त्वदर्थे कलहायमानस्य ममेयती वेला विलग्ना । तदागच्छ मे गृहं, तव भ्रातृपत्नी सोत्कण्ठा तिष्ठति ।

मर्कट आह, भो मित्र ! वयं वनचराः, युष्मदीयं च जलान्ते गृहं, तत्कथं शक्यते तत्र गन्तुम्, तस्मात्तामपि मे भ्रातृपत्नीमत्रानय । येन प्रणम्य तस्या आशीर्वादं गृह्णामि । स आह, भो मित्र ! अस्ति समुद्रान्तरे सुरम्ये पुलिनप्रदेशेऽस्मद्गृहम्, तन्मम पृष्ठमारूढः सुखेनाकृतभयो गच्छ । सोऽपि तच्छ्रुत्वा सानन्दमाह । भद्र ! यद्येवं तत्किं विलम्ब्यते । त्वर्यताम् । एषोऽहं तव पृष्ठमारूढः । तथानुष्ठितेऽगाधे जलधौ गच्छन्तं मकरमवलोक्य भयत्रस्तमना वानरः प्रोवाच, भ्रातः शनैः शनैर्गम्यताम्, जलकल्लोलैः प्लाव्यते मे शरीरम् । तदाकर्ण्य मकरश्चिन्तयामास, असावगाधं जलं प्राप्तो मे वशं संजातः । मत्पृष्ठगतः तिलमात्रमपि चलितुं न शक्नोति, तस्मात्कथयाम्यस्य निजाभिप्रायम् । येनाभीष्टदेवतास्मरणं करोतु । आह च, मित्र ! त्वं मया वधाय समानीतो भार्या-

वाक्येन विश्वास्य, तत्समर्पयतामभीष्टदेवता । स आह, भ्रातः ! किं मया तस्यास्तवापि चापकृतं ? येन मे वधोपायश्चिन्तितः । मकर आह—भोः ! तस्यास्तावत्तव हृदयस्यामृतमयफलरसास्वादनमृष्टस्य भक्षणे दोहदः संजातः। तेनैतदनुष्ठितम् । प्रत्युत्पन्नमतिर्वानर आह, यद्येव तत्किं त्वया मम तत्रैव न व्याहृतम् । येन स्वहृदयं जम्बुकोटरे सदैव मया सुगुप्तं कृतं तद्भ्रातृपत्न्या अर्पयामि, त्वयाहं शून्यहृदयोऽत्र कस्मादानीतः ? तदाकर्ण्य मकरः सानन्दमाह भद्र ! यद्येवं तदर्पय मे हृदयं येन सा दुष्टपत्नी तद्भक्षयित्वाऽनशनादुत्तिष्ठति । त्वामहं तमेव जम्बूपादपं प्रापयामि । एवमुक्त्वा निवर्त्य जम्बूतलमगात् । वानरोऽपि कथमपि जल्पितविविधदेवतोपचारपूजस्तीरमासादितवान् । ततश्च दीर्घतरचङ्क्रमणेन तमेव जम्बूपादपमारूढश्चिन्तयामास—अहो ? लब्धास्तावत् प्राणाः, तन्ममैतदद्य पुनर्जन्मदिनमिव संजातम्, इति चिन्तयमानं मकर आह-

भो मित्र ! अर्पय तद्धृदयं यथा ते भ्रातृपत्नी भक्षयित्वानशनादुत्तिष्ठति ! अथ विहस्य निर्भर्त्सयन् वानरस्तमाह—धिग्धिङ् मूर्ख ! विश्वासघातक ? किं कस्यचिद्धृदयद्वयं भवति । तदाशु गम्यतां जम्बूवृक्षस्याधस्तान्न भूयोऽपि त्वयाऽत्रागन्तव्यम् ।

समुत्पन्नेषु कार्य्येषु बुद्धिर्यस्य न हीयते ।
स एव दुर्गं तरति जलस्थो वानरो यथा ॥

## बककर्कटकथा

अस्ति मालवदेशे पद्मगर्भनामधेयं सरः। तत्रैको वृद्धो बकः सामर्थ्यहीन उद्विग्नमिवात्मानं दर्शयित्वा स्थितः। स च केनचित् कुलीरेण दृष्टः पृष्टश्च किमिति भवानत्राहारत्यागेन तिष्ठति ? बकेनोक्तम्—'मत्स्या मम जीवनहेतवः, ते कैवर्तैरागत्य व्यापादयितव्या इति वार्त्ता नगरोपान्ते मया श्रुता। अतो जीविकाभावादेवास्मन्मरणमुपस्थितमिति ज्ञात्वाऽऽहारेऽप्यनादरः कृतः। ततो मत्स्यैरालोचितम्—इह समये तावदुपकारक एवायं लक्ष्यते, तदयमेव यथाकर्तव्यं पृच्छ्यताम्। मत्स्या ऊचुः—भो बक ! कोऽत्र रक्षणोपायः ? बको ब्रूते अस्ति रक्षणोपायो जलाशयान्तराश्रयणम्। तत्राऽहमेकैकशो युष्मान्नयामि। मत्स्या आहुः—एवमस्तु। ततोऽसौ बकः तान्मत्स्यानेकैकशो नीत्वा स्थले धृतवान्। कुलीरोऽपि मत्स्यकण्टकाकीर्णं तत्स्थलमालोक्याचिन्तयत्—हा ! हतोऽस्मि मन्दभाग्यः। भवतु। इदानीं समयोचितं व्यवहरिष्यामि यतः—

> तावद्भयेन भेतव्यं यावद्भयमनागतम्।
> आगतन्तु भयं दृष्ट्वा प्रहर्त्तव्यमभीतवत्॥

इत्यालोच्य स कुलीरकस्तस्य ग्रीवां चिच्छेद। स बकः पञ्चत्वं गतः।



———

# कर्णस्य वदान्यता

( ततः प्रविशति ब्राह्मणरूपेण शक्रः )

शक्रः—भो मेघाः । सूर्येणैव निवर्त्य गच्छन्तु भवन्तः ।
(कर्णमुपगम्य) भो कर्ण ! महत्तरां भिक्षां याचे ।

कर्णः—दृढं प्रीतोऽस्मि भगवन् !

यातः कृतार्थगणनामहमद्य लोके
राजेन्द्रमौलिमणिरञ्जितपादपद्मः ।
विप्रेन्द्रपादरजसा तु पवित्रमौलिः
कर्णो भवन्तमहमेष नमस्करोमि ॥

शक्रः—( आत्मगतम् )किं नु खलु मया वक्तव्यं, यदि दीर्घायुर्भवेति वक्ष्ये दीर्घायुर्भविष्यति । यदि न वक्ष्येमूढ इति मां परिभवति । तस्मादुभयं परिहृत्य किं नु खलु वक्ष्यामि ! भवतु दृष्टम् । ( प्रकाशम् ) भोः कर्ण ! सूर्य इव, चन्द्र इव, हिमवान् इव, सागर इव तिष्ठतु ते यशः ।

कर्णः—भगवन् ! किं न वक्तव्यं दीर्घायुर्भवेति । अथवा एतदेव शोभनम् । कुतः—

धर्मो हि यत्नैः पुरुषेण साध्यो भुजंगजिह्वाचपला नृपश्रियः ।
तस्मात्प्रजापालनमात्रबुद्ध्या हतेषु देहेषु गुणा धरन्ते ॥

भगवन् ! किमिच्छसि । किमहं ददामि ।

शक्रः—महत्तरां भिक्षां याचे ।

कर्णः—महत्तरां भिक्षां भवते प्रदास्ये । श्रूयन्तां मद्विभवाः ।

गुणवदमृतकल्पक्षीरधाराभिवर्षि
द्विजवर ! रुचितं ते तृप्तवत्सानुयात्रम् ।
तरुणमधिकमर्थिप्रार्थनीयं पवित्रं
विहितकनकशृङ्गं गोसहस्रं ददामि ।

शक्रः—गोसहस्रमिति । मुहूर्तकं क्षीरं पिबामि । नेच्छामि कर्ण ! नेच्छामि ।

कर्णः—किं नेच्छसि भवान् । इदमपि श्रूयताम् ।

रवितुरगसमानं साधनं राजलक्ष्म्याः
सकलनृपतिमान्यं मान्यकाम्बोजजातम् ।
सुगुणमनिलवेगं युद्धदृष्टापदानं
सपदि बहु सहस्रं वाजिनां ते ददामि ॥

शक्रः—अश्व इति मुहूर्तकमारोहामि । नेच्छामि कर्ण ! नेच्छामि ।

कर्णः—किं नेच्छति भवान् । अन्यदपि श्रूयताम् ।

मदसरितकपोलं षट्पदैः सेव्यमानं
गिरिवरनिचयाभं मेघगम्भीरघोषम् ।
सितनखदशनानां वारणानामनेकं
रिपुसमरविमर्दं वृन्दमेतद्ददामि ॥

शक्रः—गज इति । मूहूतर्कमारोहामि । नेच्छामि कर्ण ! नेच्छामि !

कर्णः—किं नेच्छति भवान् । अन्यदपि श्रूयताम् । अपर्याप्तकनकं ददामि ।

शक्रः—( किञ्चिद् गत्वा ) गृहीत्वा, गच्छामि, नेच्छामि कर्णः ! नेच्छामि ।

कर्णः—तेन हि जित्वा पृथिवीं ददामि ।

शक्रः—पृथिव्या किं करिष्यामि ।

कर्णः—तेन ह्यग्निष्टोमफलं ददामि ।

शक्रः—अग्निष्टोमफलेन किं कार्यम् ?

कर्णः—तेन हि मच्छिरो ददामि ।

शक्रः—अविहा अविहा ।

कर्णः—न भेतव्यं न भेतव्यम् । प्रसीदतु भवान् । अन्यदपि श्रूयताम् ।

अङ्गैः सहैव जनितं मम देहरक्षा
देवासुरैरपि न भेद्यमिदं सहास्त्रैः ।
देयं तथापि कवचं सह कुण्डलाभ्यां
प्रीत्या मया भगवते रुचितं यदि स्यात ॥

शक्रः—( सहर्षम् ) ददातु ददातु ।

कर्णः—( आत्मगतम् ) एष एवास्य कामः । किं नु खल्वनेककपटबुद्धेः कृष्णस्योपायः । सोऽपि

भवतु । धिगयुक्तमनुशोचितुम् । नास्ति संशयः
( प्रकाशम् ) गृह्यताम् ।

शल्यः—अङ्गराज । न दातव्यं न दातव्यम् ।

कर्णः—शल्यराज ! अलमलं वारयितुम् । पश्य

शिक्षा क्षयं गच्छति कालपर्ययात्
सुबद्धमूला निपतन्ति पादपाः
जलं जलस्थानगतं च शुष्यति !
हुतं च दत्तं च तथैव तिष्ठति !

तस्मात् गृह्यताम् । ( निकृत्य ददाति )

शक्रः—( गृहीत्वा आत्मगतम् ) हन्त ! गृहीते एते ।
( निष्क्रान्तः )

शल्य—भो अङ्गराज ! वञ्चितः खलु भवान् ।

कर्णः—केन ।

शल्यः—शक्रेण ।

कर्णः—न खलु शक्रः खलु मया वञ्चितः ।

अनेकयज्ञाहुतितर्पितो द्विजैः
किरीटमान् दानवसंघमर्दनः ।
सुरद्विपास्फालनकर्कशाङ्गुलि-
र्मया कृतार्थः खलु पाकशासनः ।

---

## समस्यापूर्तिः

एकदा मृगया परवशो राजा अत्यन्तमार्तः कस्यचित्सरोवरस्य तीरे निबिडच्छायस्य जम्बूवृक्षस्य मूलमुपाविशत्। तत्र शयाने राज्ञि जम्बोरुपरि बहुभिः कपिभिः जम्बूफलानि सर्वाण्यपि चालितानि। तानि सशब्दं पतितानि पश्यन् घटिकामात्रं स्थित्वा श्रमं परिहृत्य उत्थाय तुरङ्गमारुह्य गतः। ततस्सभायां राजा पूर्वानुभूतकपिचलितफलपतनरवमनु—कुर्वन् समस्यामाह–'गुलुगुग्गुलुगुग्गुलु'। तत आह कालिदासः—

जम्बूफलानि पक्वानि पतन्ति विमले जले।
कपिकम्पितशाखातो गुलुगुग्गुलुगुग्गुलु॥

राजा तुष्ट आह—सुकवे अदृष्टमपि परहृदयं कथं जानासि, साक्षाच्छारदाऽसीति मुहुर्मुहुः पादयोः पततिस्म।

---

## योगस्य चमत्कारः

अथ वेतालः पुनरपरां कथामकथयत्। कलिङ्गविषये यज्ञस्थलनामधेयं नगरमासीत्। तत्र यज्ञसोमनामा ब्राह्मणस्तिष्ठति तस्य ब्राह्मणी सोमदत्ता। तयोर्ब्रह्मस्वामी नाम पुत्रो जातः। स च सर्वशास्त्रज्ञो भूत्वा दैववशाद् पञ्चत्वमगात्। ततस्तत्पितरौ बहुविधं विलपन्तौ बन्धुजनसहितौ तमा-

दाय श्मशाने संस्कारार्थमाजग्मतुः। इत्येवकाले श्मशान-वासी योगी तं द्विजकुमारशरीरं सर्वशास्त्रवेत्तारं मनोहर-कलेवरमालोक्य करुणस्वरेणोच्चैः क्रन्दितवान्, परमकौतुकेन नर्तितवांश्च। सहसोत्थाय योगेन जीर्णशरीरं परित्यज्य मृतस्य द्विजकुमारस्य शरीरे प्रविवेश। कुमारे सुप्तोत्थिते तत्पितरौ परां प्रीतिमासादितवन्तौ। सर्वे बन्धुवर्याश्च हर्षिता बभूवुः। ब्रह्मस्वामी प्राप्तजीवनः सर्वभोगं परित्यज्य योगं ध्यायं-स्तस्थौ। श्मशानवासी योगी कथं वा चक्रन्द कथं वा ननर्त तत्कारणं वदतु देवः। राजा वदति शृणु रे वेताल! चिरकाल-मुपार्जितं जीर्णशरीरं त्यक्तव्यमिति चक्रन्द, जीर्णशरीरं विहाय सर्वगुणाधारं द्विजशरीरं प्राप्तव्यमिति ननर्त च।

---

## नीतिरत्नमाला

पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम्।
मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते॥

संसारकटुवृक्षस्य द्वे फले ह्यमृतोपमे।
सुभाषितरसास्वादः सङ्गतिः सुजने जने॥

मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाऽभिरमयत्यपनीय खेदम्।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिम्
किं किं न साधयति कल्पलतेव विद्या॥

विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्माऽपि तं नरं न रञ्जयति ॥

साहित्यसङ्गीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः ।
तृणन्न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम् ॥

यः प्रीणयेत्सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ।
तन्मित्रमापदि सुखे च समक्रियं यत्
एतत्त्रयं जगति पुण्यकृतो लभन्ते ॥

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥

दुर्जनः परिहर्तव्यो विद्ययाऽलङ्कृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥

यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतिमान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ते ॥

वयोवृद्धास्तपोवृद्धाः ये च वृद्धाः बहुश्रुताः ।
सर्वे ते धनवृद्धानां द्वारि तिष्ठन्ति किङ्कराः ॥

द्वाविमावम्भसि क्षेप्यौ गाढं बद्ध्वा गले शिलाम् ।
धनिनं चाप्रदातारं दरिद्रं चातपस्विनम् ॥

दरिद्रान्भर कौन्तेय ! मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥

अयं निजः परो वेत्ति गणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥

सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयात् एष धर्मः सनातनः ॥

उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः ।
नहि सिंहस्य सुप्तस्य प्रविशन्ति मुखे मृगाः ॥

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं प्रधानमिति कापुरुषा वदन्ति ।
दैवं विहाय कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥

वरमेको गुणी पुत्रो न च मूर्खशतान्यपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च ॥

एकेन शुष्कवृक्षेण दह्यमानेन वह्निना ।
दह्यते तद्वनं सर्वं दुष्पुत्रेण कुलं यथा ॥

कष्टं खलु मूर्खत्वं कष्टं खलु यौवनेषु दारिद्र्यम् ।
कष्टादपि कष्टतरं परगृहवासः परान्नं च ॥

चलं वित्तं चलं चित्तं चले जीवितयौवने ।
चलाचलमिदं सर्वं कीर्तिर्यस्य स जीवति ।

स जातो येन जातेन याति वंशसमुन्नतिम् ।
परिवर्तिनि संसारे मृतः को वा न जायते ॥

अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वनेऽपि विसर्जितः कृतप्रयत्नोऽपि गृहे न जीवति ॥

काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन तु मूर्खाणां निद्रया कलहेन वा ॥

जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिताः ।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥

नरपतिहितकर्ता द्वेष्यतां याति लोके
जनपदहितकर्ता त्यज्यते पार्थिवेन ।
इति महति विरोधे विद्यमाने समाने
नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥

---

## अनन्तभट्टकथा

मानभङ्गः परकृतो मानिना मङ्गलावहः ।
अनन्तो मानभंगेन पाण्डित्यं परमं गतः ॥

चोलेष्वनन्तभट्टो नाम कोऽपि कविरभूत् । स चाल्ये सम्यगनभ्यस्त विद्यः । तस्य द्वित्रा सोदराः अधीतशास्त्रा

आसन्। तद्गृहे स्त्रियः पुमांसश्च सदा गीर्वाणभाषया व्यवहरन्तिस्म। कञ्चिद्दिवसे भ्रातृभिः सह भुञ्जानः स भट्टः पत्नीमाह—दधिमानय इति प्रयोगं श्रुत्वा तद्भ्रातरस्तेषां पत्न्यश्च मन्दं जहसुः। साकूतः स हासस्तस्य तत्पत्याश्च नितरां लज्जावहोऽभवत्। परं धीमती तत्पत्नी पत्युः परिभवमसहमाना तानाह--भोः, किमेवं युष्माभिर्विहस्यते? मद्भर्त्रा दधिमानय इत्युक्तम्। तत्र दधि, मा, आनय, इति पदच्छेदः। तक्रमानयेति वाक्यार्थः इति। एवमभिधाय पत्युः तक्रं पर्यवेपयत्। सोऽपि स्वाज्ञानमूलं पराभवमसहमानोऽव्युत्पन्नमात्मानं गर्हयन्नन्तर्लज्जितस्तेषां मुखमभिवीक्षितुमपारयन्भोजनानन्तरमेव देशान्तरं गतः। साधु चेदमुच्यते।

प्राणं वाऽपि परित्यज्य मानमेवाभिरक्षतु।
अनित्यो भवति प्राणो मानस्त्वाचन्द्रतारकम्।

ततः तत्र च कमपि पण्डितमणिमुपास्य तत्प्रसादेन समधिगतसकलशास्त्रः काव्यनिर्माणधुरीणः कविरजायत। अथ च विद्वत्प्रियस्य कस्याऽपि महीपतेः सभां गतः। स चास्य निरतिशयं पाण्डित्यं कवित्वं च परिज्ञाय परं संतुष्य बहुधा संमान्य स्वसभायाः प्रधानपण्डितमेनमकरोत्। इत्थं तेन भूपालेन पूजितः कञ्चित्कालमतिवाह्य बन्धुदर्शनलालसा

शाजिगमिषां राज्ञे न्यवेदयत् । राजाऽपि त गजेन्द्रमधि-
। विविधैर्विद्वद्भिरुदैरलंकृत्य त जन्मभूमिं प्रेषयामास ।
च परमानन्दतुन्दिलः स्वगृहं प्राप्य बन्धुभिर्बहुमतः
रा सह सुखमवसत् ।

---

## पुत्रोपदेशः

एवं च क्रमेणाधीताशेषविद्यं समारूढयौवनं चानुगम्या
ोदितमाचार्यैश्चन्द्रापीडमानेतुं राजा तारापीडो बलाधिकृतं
हकनासानमाहूय बहुतुरगपदातिपरिवृतमतिप्रशस्तेऽहनि
णोत् । स गत्वा विद्यागृहं द्वास्थैः समावेशितः
य क्षितितलावलम्बितचूडामणिना शिरसा प्रणम्य
नयमासने राजपुत्रानुमतोन्यषीदत् । स्थित्वा मुहूर्तमात्रं
हकश्चन्द्रापीडमुपसृत्य दर्शितविनयोऽब्रवीत् । कुमार !
ाजः समाज्ञापयति । पूर्णा नो मनोरथाः । अधीतानि
ाणि । शिक्षिताः सकलाः कलाः । गतः सर्वास्वायुध-
सु परां प्रतिष्ठाम् । अनुमतोऽसि विनिर्गमाय विद्या-
ःसर्वाचार्यैः । उपगृहीतशिक्षमवगतसकलकलाकलापं
ासीशशिनमिवोद्गतं पश्यतु त्वां जनः । व्रजन्तु सफलता-
चिरदर्शनोत्कण्ठितानि लोकलोचनानि । अयमत्र भवतो
ः संवत्सरो विद्यागृहमधिवसतः । प्रविष्टोऽसि षष्ठमनु-
वर्षम् एवं सम्पिण्डितेनामुना षोडशेन प्रवर्धसे । तदद्य

प्रभृति निर्गत्य दर्शनोत्सुकाभ्यो दत्त्वा दर्शनमखिलामातृभ्यो-ऽभिवाद्य च गुरूनपगतनियन्त्रणो यथासुखमनुभवराज्य-सुखानि । सम्मानय राजलोकम् पूजय द्विजातीन् । परिपालय प्रजाः । आनन्दय बन्धुवर्गमिति ।

---

## वनवासकाले

ततः सबालवृद्धा सा पुरी परमपीडिता ।
राममेवाभिदुद्राव घर्मार्त्तः सलिलं यथा ॥
संयच्छ वाजिनां रश्मीन्सूत ! याहि शनैः शनैः ।
मुखं द्रक्ष्याम रामस्य दुर्दर्शं नो भविष्यति ॥
अथ राजा वृतः स्त्रीभिर्दीनाभिः दीनचेतनः ।
निर्जगाम प्रियं पुत्रं द्रक्ष्यामीति ब्रुवन्गृहात् ॥
दृष्ट्वा तु नृपतिः श्रीमानेकचित्तगतं पुरम् ।
निपपातैव दुःखेन कृत्तमूल इव द्रुमः ॥
प्रत्यागारमिवायान्ती सवत्सा वत्सकारणात् ।
बद्धवत्सा यथा धेनू राममाताभ्यधावत ॥
तिष्ठेति राजा चुक्रोश याहि याहीति राघवः ।
सुमन्त्रस्य बभूवात्मा चक्रयोरिव चान्तरा ॥
यमिच्छेत् पुनरायतं नैनं दूरमनुव्रजेत् ।
इत्यमात्या महाराजमूचुर्दशरथं वचः ॥
न्यवर्तत जनो राज्ञो रामं कृत्वा प्रदक्षिणम् ।
मनसाप्याशुवेगेन न न्यवर्तत मानुषम् ॥

---

# सोमदत्तोत्पत्तिकथा

ततः परस्मिन् दिवसे वामदेवान्तेवासी तदाश्रमवासी समराधितदेवकीर्तिं निर्भर्सितमारमूर्तिं कुसुमसुकुमारं कुमारमेकमवगमय्य नरपतिमवादीत् । देव ! तीर्थयात्राभिलाषेण कावेरीतीरमागतोऽहं विलोलालकं बालकं निजोत्सङ्गतले निधाय रुदतीं स्थविराम् एकां निरीक्ष्य अवोचम् ।-'स्थविरे ! का त्वम् ? अयमर्भकः कस्य नयनानन्दकरः ? कान्तारं किमर्थमागता ! शोककारणं किम् ?" इति सा करयुगेन वाष्पजलम् उत्सृज्य निजशोकशङ्कूत्पाटनक्षममिव मामवेक्ष्य शोकहेतुमवोचत् ।

द्विजोत्तम ? राजहंससचिवस्य सितवर्मणः कनीयानात्मजः सत्यवर्मा तीर्थयात्राप्रसङ्गेन देशमेनमागच्छत् स कस्मिंश्चित् ग्रामे काली नाम एकस्य भूसुरस्य नन्दिनीं विवाह्य तस्या अनपत्यतया गौरीनाम तद्भगिनीं काञ्चनकान्तिं परिणीय तस्यामेकं तनयमलभत । काली सासूयम् एकदा धात्र्या मया सह बालमेनमेकेन मिषेण आनीय तटिन्यामेतस्यामक्षिपत् । करेणैकेण बालम् उद्धृत्यापरेणाम्भसि प्लवमाना नदीवेगागतस्य कस्यचित्तरोःशाखाम् अवलम्ब्य तत्र शिशुं निधाय नदीवेगेन उह्यमाना केनचित्

तरुलग्नेन कालभोगिना अहम् अदंशि । मदवलम्बीभूतो भूरुहोऽयम् अस्मिन् देशे तीरमगमत् । गरलस्योद्दीपनतया मयि मृतायामरण्ये कश्चन शरण्यो नास्तीति मया शोच्यते इति । ततो विषमविषज्वालया सा धरणीतले न्यपतत् । दयाविष्टहृदयोऽहं मन्त्रबलेन विषविकारमपनेतुमक्षमः समीपकुञ्जे औषधविशेषमन्विष्य प्रत्यागच्छन्नुत्क्रान्तजीवितां व्यलोकयम् । तदनु तस्याः पावकसंस्कारं विरच्य शोकाकुलचेता बालमेनमगतिमादाय सत्यवर्मवृत्तान्तश्रवणवेलायां तन्निवासाग्रहारनामधेयस्य अश्रुततया तदन्वेषणमशक्यम् इत्यालोच्य भवदमात्यनन्दनस्य भवानेव अभिरक्षितेति भवन्तमेनमानयमिति । तन्निशम्य सत्यवर्मस्थितेः सम्यगनिश्चिततया खिन्नमना राजा सुमतये मन्त्रिणे सोमदत्तन्नाम तदनुजतनयम् अर्पितवान् । सोऽपि सोदरमागतमिव मन्यमानो विशेषेण पुपोष ।

एवं मिलितेन कुमारमण्डलेन सह बालकेलिमनुभवन्नधिरूढानेकवाहनो राजवाहनोऽनुक्रमेण चूडोपनयनादिसंस्कारजातम् अलभत । ततः सकललिपिज्ञानं सकलदेशीयभाषापाण्डित्यं, षडङ्गसहितवेदसमुदायकोविदत्वं, काव्यनाटकाख्यानकाख्यायिकेतिहासचित्रकथानैपुण्यं, धर्मज्योतिस्तर्कमीमांसादिसमस्तशास्त्रनिकरचातुर्यं काटिल्यकामन्दकीयादिनीतिपटलकौशलं ,वीणाद्यशेषवाद्यदाक्ष्यं

सङ्गीतसाहित्यहारित्वं, मणिमन्त्रौषधादिमायाप्रपञ्चप्राविण्यं, मातङ्गतुरङ्गादिवाहनारोहणपाटवं, विविधायुधप्रयोगचतुरत्वं तत्तदाचार्य्येभ्यः सम्यक् लब्ध्वा यौवनेन विलसन्तं कृत्येषु अनलसं तं कुमारनिकरं निरीक्ष्य महीवल्लभः सोऽहं शत्रु-जनदुर्लभ इति परमानन्दममन्दमविन्दत।

---

## अशरणा ब्राह्मणी

अन्येद्युरास्थानवर्तिनं वत्सराजमुपेत्य प्रतीहारो विज्ञापयामास। महाराज! देवदर्शनकाङ्क्षिणी कापि दुर्गता ब्राह्मणी शिशुकद्वयसंयुक्ता द्वारि स्थितेति। तच्छ्रुत्वा महीभृताभ्यनुज्ञाते तत्प्रवेशे सा कृशपाण्डुधूसरा विशीर्णेन वाससा विधुरीकृता दुःखदैन्यनिभौ बालकावङ्के बिभ्रती प्रविवेश। कृतोचितप्रणामा सा राजानं सप्रश्रयं सकरुणं प्रोवाच। हे देव! अहं कुलजा ब्राह्मणी। विधिवशादीदृशीं दुर्गतिं प्राप्ता। दैवाद्युगपदेतौ तनयौ जातौ मम। साम्प्रतं दीनाऽस्मि। तेनेह शरणागतवत्सलं देवं शरणं प्राप्ताऽस्मि। अधुना प्रभुः प्रमाणम्। तन्निशम्य सदयो राजा 'इयं वासवदत्तायै देव्यै नीत्वार्प्यताम्' इति प्रतीहारमादिशत्। ततश्च तेन सा देव्याःसमीपं नीता तस्यै प्रदत्ता च। राजा विसृष्टां प्रतीहारादुपागतां तां ब्राह्मणीं राज्ञी श्रद्धेतराम्। युग्मापत्यामेतां दीनां पश्यन्ती व्यचिन्तयत 'अहो किमेतत् प्रजापतेर्वामिकवृत्तित्वम्' ततः

स्नानकारिणी सा तस्या ब्राह्मण्याः स्नपनाय चेटिकाः समादिशत्। ताभिर्ब्राह्मणी स्नापिता दत्तवस्त्रा स्वादु भोजिता च। अथ स्वस्थमानसां तां ब्राह्मणीं समापितस्नानां गृहीताहारां महिषी प्राह-कस्य त्वं भार्या? को वा ते वृत्तान्त इति। तदा सा ब्राह्मणी प्रतिवक्तुं प्रचक्रमे—देवि! मालवेषु कोऽप्यग्निदत्तनामा द्विज आसीत्। स श्रीसरस्वत्योर्निलयो बभूव। तस्य शङ्करदत्तः शान्तिकरश्चेति स्वानुरूपौ द्वौ तनयौ बभूवतुः। तयोः शान्तिकरो विद्यार्थी स्वपितुर्गृहादकस्मान्निर्गत्य क्वाऽपि गतः। तस्य ज्येष्ठो भ्राता शङ्करदत्तो यज्ञार्थभृतसम्पदो यज्ञदत्तस्य तनयां परिणीतवान्। कालेन मम भर्तुः पिताऽग्निदत्तो वृद्धो भार्ययानुगतो लोकान्तरं गतः। तीर्थोद्देशाच्च मम वल्लभो धृतगर्भां मां विमुच्य पितृशोकेनाऽन्धः सरस्वतीप्रवाहे तनुं जहौ। इमं वृत्तान्तं ज्ञात्वा दुःसहशोकवशं गताऽहम्। ततो मय्यार्द्रशोकायामकस्माद्दस्युभिरेत्यास्मन्निवासः सकलोऽपि विलुण्ठितः। तत्क्षणं तिसृभिर्ब्राह्मणीभिः सार्धं शीलभ्रंशभयादात्तस्वल्पवस्त्रा पलायिता। विदूरं च गत्वा देशं तदन्विता मासमात्रं कृच्छ्रकर्मोपजीविनी स्थिता। ततो लोकादनाथशरणं वत्सेश्वरं श्रुत्वा दुःखिता शीलैकपाथेयाऽहमिहागता। आगत्यैव युगपत्तनयावुभौ प्रसूतास्मि। शोको विदेशः दारिद्र्यं प्रसवोऽप्ययं द्विगुणः दुःखकरः। अहो वेधसा द्वारमिदमपावृतमापदामेतयोर्बालयोर्वर्धनाय मे गतिर्नास्ति इत्यालोच्य योषि-

दुर्भूषणां लज्जामपहाय मया प्रविश्य वत्सेश्वरः सदसि याचितः। तदादेशेन मया त्वच्चरणान्तिकं प्राप्तम्। द्वारात्प्रतिहता इव मे विपदश्च निवृत्ताः—इत्येष मम वृत्तान्तः। अहं नाम्ना पिङ्गलिका। हे देवि! स शान्तिकरो मे देवरो विदेशगः कुत्र देशे तिष्ठत्यथापि न बुध्यते। उक्तस्ववृत्तान्तां कुलीनामवधार्य प्रीता देवी वितर्क्यैवमब्रवीत्। इह शान्तिकरो नामास्माकं पुरोहितः स्थितः। स वैदेशिको वर्तते। देवरस्ते भविष्यति। इत्युक्त्वा देवी झटिति शान्तिकरमानाय्य तमन्वयमपृच्छत्। उक्तान्वयाय तस्मै सा संजातनिश्चया इयं ते भ्रातृजाया-इति तां ब्राह्मणीं समदर्शयत्। जातायां परिज्ञप्तौ ज्ञातबन्धुक्षयः शान्तिकरः प्रजावतीं गृहं निन्ये। तत्र पितरं भ्रातरं चानुशोच्य बालकद्वितयान्वितां तां यथोचितमाश्वासयामास। देवी वासवदत्ताऽपि मुदन्विता तयोर्बालकयोः शान्तिसोमो वैश्वानरश्चेति नामनी कृत्वा ताभ्यामनल्पद्रविणं वितीर्य तत्सकलं पुरोहितकुलं चिरसुखभाजमकरोत्।

---

## सुभद्रां प्रति

अथार्जुनगृहं गत्वा वासुदेवः सुदुर्मना।<br>
भगिनीं पुत्रशोकार्तामाश्वासयत दुःखिताम्॥<br>
मा शोकं कुरु वार्ष्णेयि! कुमारं प्रति सत्सुषा।<br>
सर्वेषां प्राणिनां भीरु। निष्ठैषा कालनिर्मिता॥

कुले जातस्य वीरस्य क्षत्रियस्य विशेषतः ।
सदृशं मरणं ह्येतत्तव पुत्रस्य मा शुचः ॥
दिष्ट्या महारथो वीरः पितुस्तुल्यपराक्रमः ।
क्षात्रेण विधिना प्राप्तो वीराभिलषितां गतिम् ॥
जित्वा सुबहुशः शत्रून् प्रेषयित्वा च मृत्यवे ।
गतः पुण्यकृतां लोकान् सर्वकामदुहोऽक्षयान् ॥
तपसा ब्रह्मचर्येण श्रुतेन प्रज्ञयाऽपि च ।
सन्तो यां गतिमिच्छन्ति प्राप्तस्तां तव पुत्रकः ॥
वीरसूर्वीरपत्नी त्वं वीरजा वीरबान्धवा ।
मा शुचस्तनयो भद्रे ! गतः स परमां गतिम् ॥
प्राप्स्यते चाप्यसौ क्षुद्रः सैन्धवो बालघातकः ।
अस्यावलेपस्य फलं ससुहृद्गणबान्धवः ॥
श्वः शिरः श्रोष्यसे तस्य सैन्धवस्य रणे हृतम् ।
समन्तपञ्चकाद् बाह्यं विशोका भव मा रुदः ॥
क्षात्रधर्मं पुरस्कृत्य गतः शूरः परां गतिम् ।
यां वयं प्राप्नुयामो हि ये चान्ये शस्त्रजीविनः ॥
व्यूढोरस्को महाबाहुरनिवर्ती रथप्रणुत् ।
गतस्तव वरारोहे ! पुत्रः स्वर्गं ज्वरं जहि ॥
अनुयातश्च पितरं मातृपक्षं च वीर्यवान् ।
सहस्रशो रिपून् हत्वा हतः शूरो महारथः ॥
आश्वासय स्नुषां राज्ञि ! मा शुचः क्षत्रिये ! भृशम् ।

श्वः प्रियं सुमहच्छ्रुत्वा विशोका भव नन्दिनि! ॥
यत् पार्थेन प्रतिज्ञातं तत्तथा न तदन्यथा।
चिकीर्षितं हि ते भर्तुर्न भवेज्जातु तन्मृषा ॥

## गुरुभक्ति

( [illegible]

पुरा कश्चित् धौम्यो नाम ऋषिः आसीत्, तस्य शिष्यास्त्रयो बभूवुः—आरुणिः, उपमन्युः, वेदश्चेति। स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास, "गच्छ वत्स! केदारखण्डं बधान" इति।

स उपाध्यायेन सन्दिष्टः आरुणिः पाञ्चाल्यस्तत्र गत्वा केदारखण्डं बन्धुं नाशकत्। स क्लिश्यमानोऽचिन्तयदुपायं- "भवतु एवं तावत् करिष्यामि" इति स तत्र संविवेश केदारखण्डे, शयाने तथा तस्मिन् तत् उदकं तस्थौ।

ततः कदाचिदुपाध्यायो धौम्यः शिष्यान् अपृच्छत्—'क्व आरुणिः पाञ्चाल्यो गतः?' इति। ते तं प्रत्यूचुः, 'भगवन्! त्वयैव प्रेषितः, 'गच्छ, केदारखण्डं बधान' इति। स एवमुक्तः तान् प्रत्युवाच, तस्मात् तत्र सर्वे गच्छामः, यत्र स गतः—इति।

स तत्र गत्वा, तस्याह्वानाय शब्दं चकार, भोः आरुणे! पाञ्चाल्य! क्वाऽसि, एहि, इति। स तत् श्रुत्वा आरुणि-

रुपाध्यायवाक्यं, तस्मात् केदारखण्डात् सहसा उत्थाय तमु-
पाध्यायमुपतस्थे, प्रोवाचैनम्, अयमस्मि अत्र केदारखण्डे
निःसरदुदकमवारणीयं संरोद्धुं संविष्टः। भगवच्छब्दं श्रुत्वैव
सहसा विदार्य्य केदारखण्डं, भगवन्तमुपस्थितः। तत् अभिवादये
भगवन्तम् आज्ञापयतु भवान्,-कमर्थं करवाणि' इति।

तेन एवमुक्त उपाध्यायः प्रत्युवाच, यस्मात् त्वं केदार-
खण्डं विदार्य्य उत्थितस्तस्मादुद्दालक इति नाम्ना भवि-
ष्यसि। यस्माच्च त्वया मद्वचनमनुष्ठितं तस्माच्छ्रेयोऽवा-
प्स्यसि इति। सर्वे च वेदाः प्रतिभास्यन्ति, सर्वाणि च
धर्मशास्त्राणि इति। स तदुपाध्यायेन अनुगृहीतः एवमुक्त
आरुणिर्यथेष्टं देशं जगाम।

(द्वितीयोपाख्यानम्)

अथापरः शिष्यस्तस्यैव धौम्यस्योपमन्युर्नाम। तमु-
पाध्यायः प्रेषयामास, "वत्स! उपमन्यो गा रक्ष' इति। स
उपाध्यायवचनात् अरक्षत् गाः।

स चाहनि गाः रक्षित्वा दिवसक्षये गुरुगृहमागत्य
उपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे। तम् उपाध्यायः
स्थूलशरीरमपश्यत्, उवाचैनं, वत्स! उपमन्यो! केन वृत्तिं
कल्पयसि? स्थूलोऽसि भृशम्' इति। स उपाध्यायं प्रत्यु-
वाच, भो भैक्ष्येण वृत्तिं कल्पयामि' इति।

तमुपाध्यायः प्रत्युवाच, मह्यमनिवेद्य, भैक्ष्यं नोपयोक्त-

भ्यम् इति। स तथा इत्युक्त्वा भैक्ष्यं चरित्वा उपाध्यायाय न्यवेदयत्। स च तस्मात् उपाध्यायः सर्वमेव भैक्ष्यमगृह्णत्।

स पुनः अरक्षत् गाः। अहनि रक्षित्वा निशामुखे गुरुकुलमागत्य गुरोरग्रतः स्थित्वा नमश्चक्रे।

तमुपाध्यायस्तथापि स्थूलं दृष्ट्वोवाच, वत्स! उपमन्यो! सर्वमशेषतस्ते भैक्ष्यं गृह्णामि, केनेदानीं वृत्तिं कल्पयसि?' इति। स एवमुक्तस्तमुपाध्यायं प्रत्युवाच, 'भगवते निवेद्य अपरं भैक्ष्यं चरामि, तेन वृत्तिं कल्पयामि' इति

तमुपाध्यायः प्रत्युवाच, 'नैतत् न्याय्यं कार्य्यम्, यतः एवम् अन्येषामपि भैक्ष्योपजीविनां वृत्तिरोधं करोषि, एवं वर्तमानो लुब्धोऽसि?' इति। सः 'तथा' इत्युक्त्वा गा अरक्षत्। रक्षित्वा च पुनः उपाध्यायगृहमागत्य उपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे।

तमुपाध्यायस्तथाऽपि स्थूलमेव दृष्ट्वा पुनरुवाच, 'वत्स! उपमन्यो! अहं ते सर्वं भैक्ष्यं गृह्णामि, न चान्यत् चरसि, स्थूलोऽसि भृशं, केन वृत्तिं कल्पयासि?' इति स एवमुक्तस्तमुपाध्यायं प्रत्युवाच, भोः एतासां गवां पयसा वृत्तिं कल्पयामि—इति।

तमुवाच उपाध्यायः, नैतत् पय उपयोक्तुम्, भवतो मया नाभ्यनुज्ञातम्' इति स तथा इति प्रतिज्ञाय गा

रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे ।

तमुपाध्यायः स्थूलमेव दृष्ट्वा उवाच, वत्स उपमन्यो ! भैक्ष्यं नाश्नासि, न चान्यत् चरसि, पयो न पिबसि, भृशं स्थूलोऽसि, केनेदानीं वृत्तिं कल्पयसि ?" इति, स एवमुक्तस्त-मुपाध्यायं प्रत्युवाच, 'भोः फेनं पिबामि, यम् इमे मातॄणां स्तनान् पिबन्तः उद्गिरन्ति" ।

तमुपाध्यायः प्रत्युवाच, "एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति । तदेषामपि वत्सानां वृत्तिरोधं करोषि, एवं वर्तमानः फेनमपि त्वं न पातु-मर्हसि" इति ।

स तथा इति प्रतिश्रुत्य पुनररक्षत् गाः । तथा प्रति-षिद्धो भैक्ष्यं नाश्नाति, न चान्यत् चरति, पयो न पिबति, फेनं नोपयुंक्ते ।

अथ कदाचिदरण्ये क्षुधार्त्तोऽर्कपत्राणि अभक्षयत् । स तैरर्कपत्रैर्भक्षितैः क्षारतिक्तकटुमिश्रचक्षुषि उपहतोऽन्धो बभूव । ततः सोऽन्धोऽपि इतस्ततः भ्रमन् कूपेऽपतत् । अथ तस्मिन् नागच्छति, सूर्ये चास्ताचलालम्बिनि, उपाध्यायः शिष्या-नुवाच "कथं नायाति उपमन्युः ?" । ते ऊचुः, "वनं गतो गा रक्षितुम्" इति । तानाह उपाध्यायः, मयोपमन्युः प्रति-षिद्धः, स नियतं कुपितः, यतो नागच्छति चिरम्, अतोऽन्वे-ष्टव्यः—इति ।

एवमुक्त्वा, गुरुः शिष्यैःसार्द्धम् अरण्ये गत्वा, तस्याह्वानाय शब्दं चकार, भो उपमन्यो! क्वाऽसि वत्स! एहि इति।

स उपाध्यायवचनं श्रुत्वा प्रत्युवाच—उच्चैः अहमस्मिन् कूपे पतितोऽस्मि इति। तमुपाध्यायः प्रत्युवाच, कथं त्वमस्मिन् कूपे पतितः?" स उपाध्यायं प्रत्युवाच-अर्कपत्राणि भक्षयित्वा अन्धीभूतोऽस्मि। अतः कूपे पतितः—इति। तमुपाध्यायः प्रत्युवाच—"अश्विनीकुमारौ स्तुहि, तौ देवभिषजौ त्वां चक्षुष्मन्तं करिष्यतः" इति।

स एवमुक्त उपाध्यायेनोपमन्युः स्तोतुमुपचक्रमे देवौ अश्विनीकुमारौ। तेन अभिष्टुतौ देववैद्यौ आजग्मतुः, आहतुश्चैनम्, 'प्रीतौ आवाम्' एष तेऽपूपः अश्नुहि एनम्" इति॥

स एवमुक्तः प्रत्युवाच, "देवौ, नाऽहमेनमपूपमुपयोक्तुमुत्सहे गुरवेऽनिवेद्य"—इति। ततस्तमश्विनीकुमारौ ऊचतुः, "आवाभ्यां पूर्वं तव उपाध्यायेनैव अभिष्टुताभ्याम् अपूपो दत्तः एवमुक्तः स तेन अनिवेद्य गुरवे; त्वमपि तथैव कुरुष्व, यथाकृतमुपाध्यायेन" इति।

स एवमुक्तोऽश्विनीकुमाराभ्यां लब्धचक्षुः उपाध्यायसकाशमागत्य उपाध्यायमभ्यवादयत्, आचचक्षे च सर्वं वृत्तान्तम्। स चास्य प्रीतिमान् बभूव, आह चैनं, "यथा देवौ देवभिषजौ आहतुः तथा त्वं श्रेयोऽवाप्स्यसि" इति।

सर्वे च ते वेदाः प्रतिभास्यन्ति, सर्वाणि च धर्मशास्त्राणि" इति। एषा तस्यापि परीक्षा उपमन्योः।

(तृतीयशिष्योपाख्यानम्)

अथापरः शिष्यः तस्यैव धौम्यस्य वेदो नाम आसीत्। तमुपाध्यायः समादिदेश, 'वत्स वेद! इहास्यतां तावन्मम गृहे कञ्चित् कालम्, शुश्रूषुणा भवितव्यम्, मत्सेवा च कर्तव्या, श्रेयस्ते भविष्यति" इति।

स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषणपरोऽवसत्, नित्यं गुरुणा कार्यभारेषु नियोज्यमानः शीतोष्णक्षुत्तृष्णा-दुःखसहः सर्वत्राऽप्रतिकूलः।

तस्य महता कालेन गुरुः परितोषं जगाम। तत्परितोषाच्च श्रेयः सर्वज्ञताञ्च स अवाप। एषा परीक्षा वेदस्य।

---

## शुकस्य मनोदशा

"अतिकष्टास्वप्यवस्थासु जीवितनिरपेक्षा न भवन्ति खलु जगति प्राणिनां प्रवृत्तयः। नास्ति जीविताद्भिमततर-मिह जगति सर्वजन्तूनाम्। उपरतेऽपि ताते यदहमविकलेन्द्रियः पुनरेव प्राणिमि। धिङ् मामकरुणमकृतज्ञम्। अहो खलं खलु मे हृदयम्। मया हि लोकान्तरगतायामम्बायां नियम्य शोकावेगमाप्रसवदिवसात्परिणतवयसापि सता-ऽऽत्मसंवर्धनक्लेशमतिमहान्तमपि स्नेहवशादगणयता

यत्तातेन परिपालितस्तत्सर्वमेकपदे विस्मृतम्। अतिकृपणाः खल्वमी प्राणाः। यदुपकारिणमपि तातं क्वापि गच्छन्त-मद्यापि नानुगच्छन्ति। सर्वथा न कञ्चित् न खलीकरोति जीविततृष्णा। यदीदृगवस्थामपि मामायासयति जला-भिलाषः। अद्यापि दूर एव सरस्तीरम्। तथाहि—जल-देवतानूपुररवानुकारि दूरेऽद्यापि कलहंसविरुतमेतत्, अस्फु-टानि श्रूयन्ते सारसरसितानि। विप्रकर्षात् सञ्चरति नलिनी-खण्डपरिमलः। दिवसस्येयं कष्टा दशा वर्तते। तथाहि—रविरम्बरतलमध्यवर्ती स्फुरन्तमातपमनवरतं करैर्विकिरति। अधिकां स उपजनयति तृषाम्। संतप्तपांसुपटला भूः। अति-प्रबलपिपासावसन्नानि गन्तुमल्पमपि मे नालमङ्गानि अप्रभुरस्म्यात्मनः। सीदति मे हृदयम्। अन्धकारतामुपयाति चक्षुरपि। अपि नाम खलो विधिरनिच्छतोऽपि मे मरण-मुपपादयेत्।

---

## तपस्याप्रभावः

धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम्

ब्राह्मेण तेजसा पूर्वं क्षात्रतेजः पराजितम्।

पुरा किल महाक्षत्रियो विश्वामित्रः सपुत्रदारः कदा-चित्पृथ्वीपर्यटनाय ससैन्यः प्रतस्थे। बहून्देशान्परिक्रम्य पावनानि च क्षेत्राणि बहूनि संसेव्य, क्रमेण ब्रह्मर्षेर्वसिष्ठस्या-श्रममभ्याजगाम। अभ्यागतं तं महाराजं वसिष्ठोऽनामयं पृष्ट्वा

फलमूलादिभिरुपहारैर्यथार्हमुपचचार। अथ सपरिजनस्य तस्यातिथ्यं चिकीर्षुः कामदुघां शवलां नन्दिनीमातिथ्यसंभारसंभरणाय समादिदेश। सापि कामदोग्ध्री तत्क्षणमेव षड्रसोपेतंमोदकलड्डुकवटकपर्प्पटापूपातिरसादिभिर्विविधैरुपस्कारैः सहितं विस्मयनीयं मानुषदुर्लभं चतुर्विधमन्नं जनयामास। तदुपभुज्य सपरिवारो महाराजस्तृप्तेर्विस्मयस्य च परां काष्ठामारूढश्चिन्तयामास—मुनिरयं वनस्थः केवलं कन्दमूलफलाशनः। न च जानपदानि वस्तून्यस्य सुलभानि। तत्कथमसावेतादृशमसार्वभौमसुलभमातिथ्यमस्माकं कृतवान्। नूनमिदं स्वर्धेनोः प्रभावविलसितं स्यात्—इति। एवं विचिन्त्य सुरभिं स्वीचिकीर्षुर्महर्षिमाह—"महर्षे, श्लाघ्यतमेनानेन भवदातिथ्येन सपरिवारोऽहमतितरां तृप्तिमागतः। परन्तु येयं स्वर्धेनुर्नन्दिनी धेनुरत्नं हि सा। रत्नहारी च पार्थिव इति सर्वजनविदितम्, तदिमां नन्दिनीं मह्यं दातुमर्हसि" इति। तच्छ्रुत्वा स मुनिरग्निहोत्रादिनिखिलक्रियाकलापनिर्वर्तनसाधनभूतां कामदुघां तां कामधेनुं तस्मै दातुं नानुमेने। अथ स राजा स्वधेनुविनिमयेन तां दातुं मुनिं बहुधा निर्बबन्ध। तदपि मुनिर्नाभ्युपागमत्। अथायमभिमान्यवनिपालः स्वनिदेशलङ्घनमसहमानः क्रोधमाविशन्सुरभिं बलादाचकर्ष आकृष्टा च सोच्चैस्तरामाक्रोशन्ती, मुनिना प्रेरिता म्लेच्छादीनि विविधानि बलानि तत्क्षणमेव जनयामास। अथोभयोः

सैन्ययोर्विबुधविस्मयावहं विभीषणं युद्धं प्रावर्तत। तत्र क्रमेण राजसैन्यं सुरभिसैन्येन निःशेषं नाशितमभूत्। अथ शतं विश्वामित्रस्य पुत्राः सुसंक्रुद्धा आयुधपाणयो महात्मानं वसिष्ठमभ्यधावन्। स च भगवान्हुँकारेणैव तान्सर्वान्भस्मसादकरोत्। एवं ब्रह्मिष्ठेन वसिष्ठेन हतपुत्रो हतसैन्यश्च क्षत्रियप्रवरो भग्नदंष्ट्रो नाग इव सद्यो निष्प्रभतां गतः। अथ हतशेषमेकं पुत्रं राज्यभरणाय नगरं संप्रेष्य परं निर्वेदमापन्नो हिमवत्पार्श्वं गत्वा महादेवप्रसादमभिकांक्षन्घोरं तपश्चचार। गच्छता कालेन महादेवः प्रसन्नस्तस्मै साङ्गोपाङ्गं सरहस्यं धनुर्वेदं ब्राह्मादीनि च सर्वाणि दिव्यास्त्राणि प्रददौ। तानि लब्ध्वा परं दृप्तः स राजा ब्रह्मर्षिं वसिष्ठं तमेव मन्वानः पुनस्तदाश्रमागत्य दिव्यास्त्राणि मुमोच। तैश्च कालानलोपमैस्तत्तपोवनं कृत्स्नं निर्दग्धमभूत्। तपोवनवासिनो मुनयो मृगाः पक्षिणश्च भीता नानादिग्भ्यः पलायांचक्रुः। अथ शून्यमाश्रमं विलोक्य महाक्रोधसमाविष्टो वसिष्ठो विधूममिव कालाग्निं यमदण्डमिवापरं ब्रह्मदण्डमुद्यम्य कौशिकमुक्तानि माहेश्वराणि ब्रह्मास्त्रादीनि सर्वाणि दिव्यास्त्राणि जग्रास। एवं ब्राह्मेण तेजसा ग्रसितसकलदिव्यास्त्रः कौशिको भग्नदंष्ट्रो नाग इव केवलं निःश्वसन्निर्वीर्यश्चिन्ताकुलो भूत्वा ब्रह्मतेजः प्रशंसन्क्षत्रतेजश्च निन्दन्ब्रह्मत्वसंपादनाय तपस्तप्तुं सह महिष्या दक्षिणां दिशं ययौ।

---

## भीमस्य दयालुता

( ततः प्रविशति सुतत्रयकलत्रपरिवृतो ब्राह्मणः, पृष्ठतो घटोत्कचश्च )

ब्राह्मणः—भोः नु खल्वेषः ?

ब्राह्मणी—आर्य ! क एषोऽस्मान् सन्तापयति ?

घटोत्कचः—भो ब्राह्मण ! तिष्ठ तिष्ठ । न गन्तव्यम् 'न गन्तव्यम् ।

ब्राह्मणः—भो भोः पुरुष ! अस्त्यस्माकं मोक्षः ?

घटोत्कचः—मोक्षोऽस्ति. समयतः ।

ब्राह्मणः—कः समयः ?

घटोत्कचः—अस्ति मे तत्रभवती जननी । तयाऽहमाज्ञप्तः, पुत्र ! ममोपवास-निसर्गार्थं अस्मिन् वनप्रदेशे कश्चिन् मानुषः प्रतिगृह्य नेतव्य इति । ततो मयाऽऽसादितो भवान् । पुत्रमेकं विसर्जय ।

ब्राह्मणः—हं भो राक्षसापसद ! किमहमब्राह्मणः ?

घटोत्कचः—

यद्यर्थितो द्विजश्रेष्ठ ! पुत्रमेकं न मुञ्चसि ।
सकुटुम्बः क्षणेनैव, विनाशमुपयास्यसि ॥

ब्राह्मण—एष एव मे निश्चयः ।

कृतकृत्यं शरीरं मे, परिणायनजर्जरम् ।
राक्षसाग्नौ सुतापेक्षी, होष्यामि विधिसंस्कृतम् ॥

ब्राह्मणी—आर्य ! मा मैवम् । पतिमात्रधर्मिणी पतिव्रतेति नाम । गृहीतफलेनैतेन शरीरेण, आर्यं कुलं च रक्षितुमिच्छामि ।

घटोत्कचः—भवति ! न खलु स्त्रीजनोऽभिमतस्तत्रभवत्य

ब्राह्मणः—अनुगमिष्यामि भवन्तम् ।

घटोत्कचः—आः वृद्धस्त्वम्, अपसर ।

प्रथमः पुत्रः—भोस्तात ! ब्रवीमि खलु तावत् किञ्चित् ।

ब्राह्मणः—ब्रूहि ब्रूहि शीघ्रम् ।

प्रथमः पुत्रः—

मम प्राणैर्गुरुप्राणान्, इच्छामि परिरक्षितुम् ।
रक्षणार्थं कुलस्याऽस्य, मोक्तुमर्हति मां भवान्

द्वितीयः पुत्रः—

ज्येष्ठः श्रेष्ठः कुले लोके, पितृणां च सुसंप्रियः ।
ततोऽहमेव यास्यामि, गुरुवृत्तिमनुस्मरन् ॥

तृतीयः पुत्रः—आर्यौ ! मा मैवम् ।

ज्येष्ठो भ्राता पितृसमः, कथितो ब्रह्मवादिभिः ।
ततोऽहं कर्तुमस्म्यर्हो, गुरूणां प्राणरक्षणम् ॥

प्रथमः—वत्स ! मा मैवम् ।

आपदं हि पिता प्राप्तो, ज्येष्ठपुत्रेण तार्यते ।
ततोऽहमेव यास्यामि, गुरूणां प्राणरक्षणात् ॥

ब्राह्मणः—ज्येष्ठमिष्टतमम् न शक्नोमि परित्यक्तुम् ।

ब्राह्मणी—यथाऽऽर्यो ज्येष्ठमिच्छति तथाऽहमपि कनिष्ठमिच्छामि ।

द्वितीयः—पित्रोरनिष्टः कस्येदानीं प्रियः ?

घटोत्कचः—अहं प्रीतोऽस्मि । शीघ्रमागच्छ ।

द्वितीयः—

धन्योऽस्मि यद् गुरुप्राणाः, स्वैः प्राणैः परिरक्षितः ।
बन्धुस्नेहाद्धि महतः, कालस्नेहस्तु दुर्लभः ॥

घटोत्कचः—अहो ! स्वजनवात्सल्यमस्य ब्राह्मणवटोः ।

द्वितीयः—भोस्तात ! अभिवादये ।

ब्राह्मणः—एह्येहि पुत्र ! ब्रह्मलोकमवाप्नुहि ।

द्वितीयः—अनुगृहीतोऽस्मि । अम्ब ! अभिवादये ।

ब्राह्मणी—जात ! चिरं जीव ।

द्वितीयः—अनुगृहीतोऽस्मि । आर्य ! अभिवादये ।

प्रथमः—एह्येहि वत्स ! परिष्वजस्व गाढं माम् ।

द्वितीयः—अनुगृहीतोऽस्मि ।

तृतीयः—आर्य ! अभिवादये ।

द्वितीयः—स्वस्ति ।

तृतीयः—अनुगृहीतोऽस्मि ।

द्वितीयः—भोः पुरुष ! किंचित् ब्रवीमि ।

घटोत्कचः—ब्रूहि ब्रूहि शीघ्रम् ।

द्वितीयः—एतस्मिन् वनान्तरे जलाशय इव दृश्यते, तत्र मे अकम्पितपरलोकस्य पिपासाप्रतीकारं करिष्यामि ।

घटोत्कचः—दृढव्यवसायिन् ! गम्यताम् । अतिक्रामति मातुराहारकालः । शीघ्रं गच्छ ।

द्वितीयः—भोस्तात ! एष गच्छामि ।

( निष्क्रान्तः )

ब्राह्मणः—हा हा परिमुषिताः स्मः । हा पुत्रक ! कथं गत एव ।

घटोत्कचः—चिरायते खलु ब्राह्मणवटुः । भो ब्राह्मण ! आहूयतां तव पुत्रः ।

ब्राह्मणः—आ ! अतिराक्षसं खलु ते वचनम् ।

घटोत्कचः—मर्षयतु भवान् । किन्नामा तव पुत्रः ?

ब्राह्मणः—एतदपि न शक्यं श्रोतुम् ।

घटोत्कचः—युक्तं भोः ! ब्राह्मणकुमार ? किन्नामा ते भ्राता ?

प्रथमः—तपस्वी मध्यमः ।

घटोत्कचः—अहमेवाह्वयामि । भो मध्यम ! मध्यम ! शीघ्रमागच्छ ।

( ततः प्रविशति भीमसेनः )

भीमः—भोः ! प्राप्तोस्मि ।

घटोत्कचः—किं भवानपि मध्यमः ?

भीमः—न तावदपरः ।

मध्यमः—( उपगम्य ) भोः पुरुष ! प्राप्तोऽस्मि ।

घटोत्कचः—प्राप्तवानिदानीं खल्वसि मध्यमः ! मध्यम इव हतः ।

ब्राह्मणः—( भीमसेनमुपगम्य ) भो मध्यम ! परित्रायस्व ब्राह्मणकुलम् ।

भीमः—न भेतव्यम् । न भेतव्यम् । मध्यमोऽहमभिवादये।

ब्राह्मणः—वायुरिव दीर्घायुर्भव ।

भीमः अनुगृहीतोऽस्मि । कुतो भयमार्यस्य ?

ब्राह्मणः—श्रूयताम् । अहं खलु केशवदासो नाम ब्राह्मणः उत्तरस्यां दिशि मम मातुलो यज्ञबन्धुर्नामास्ति तस्य पुत्रोपनयनार्थं सकलत्रोऽस्मि प्रस्थितः ।

भीमः—अरिष्टोऽस्तु पन्थाः । ततस्ततः ।

ब्राह्मणः—ततः ससुतपरिजनं मामेष राक्षसो हन्तुकामोऽभ्युपैति ।

भीमः—एवम् अनेन, ब्राह्मणजनस्य मार्गविघ्नः कृतः । भवतु । निग्रहिष्यामि तावदेनम् । भोः पुरुष ! तिष्ठ तिष्ठ ।

घटोत्कचः—एष स्थितोऽस्मि ।

भीमः—किमर्थं ब्राह्मणजनमपराध्यसि ? मुच्यतां द्विजसत्तमः ।

घटोत्कचः—न मुच्यते ।

मुच्यतामिति विस्रब्धं, ब्रवीति यदि मे पिता ।
न मुच्यते तथा ह्येष, गृहीतो मातुराज्ञया ॥

भीमः—[ आत्मगतम् ] कथं मातुराज्ञेति ? अहो ! गुरुशुश्रूषुः खल्वयं तपस्वी । साधूक्तम् । माता किल मनुष्याणां दैवतानां च दैवतम् । [ प्रकाशम् ] भोः पुरुष ! श्रष्टव्यं खलु तावदस्ति ।

घटोत्कचः—ब्रूहि ब्रूहि शीघ्रम् ।

भीमः—का नाम भवतो माता ?

घटोत्कचः—श्रूयतां, हिडिम्बा नाम राक्षसी ।

भीमः—( आत्मगतम् ) एवं हिडिम्बायाः पुत्रोऽयम् । ( प्रकाशम् ) भोः पुरुष ! भोः पुरुष । मुच्यताम् ।

घटोत्कचः—न मुच्यते ।

भीमः—भो ! ब्राह्मण गृह्यतां तव पुत्रः । वयमेनमनुगमिष्यामः ।

द्वितीयः—मा मा भवानेवम् ।

त्यक्ताः प्रागेव मे प्राणाः, गुरुप्राणेष्वपेक्षया ।
युवा रूपगुणोपेतो, भवांस्तिष्ठतु भूतले ॥६॥

भीमः—आर्य ! मा मैवम् । क्षत्रियकुलोत्पन्नोऽस्मि । पूज्यतमाः खलु ब्राह्मणाः । तस्माच्छरीरेण ब्राह्मणशरीरं विनिमातुमिच्छामि ।

घटोत्कचः—अथ केनायं वारितः ?

भीमः—मया ।

घटोत्कचः—किं त्वया ?

भीमः—अथ किम् ।

घटोत्कचः—तेन हि भवानेवागच्छतु । (उभौ परिक्रामतः)
इह तिष्ठ । त्वदागमनमम्बायै निवेदयामि ।

भीमः—बाढम् । गच्छ ।

घटोत्कचः—(उपसृत्य) अम्ब ! अयमभिवादये । चिरा-
भिलषितो भवत्या आहारार्थमानीतो मानुषः ।

(प्रविश्य)

हिडिम्बा—जात चिरं जीव ! कीदृशो मानुषः आनीत ?
पश्यामि तावदेनम् । किमेष मानुष आनीतः ?

घटोत्कचः—अम्ब ! कोऽयम् ?

हिडिम्बा—उन्मत्तक ! दैवतं खल्वस्माकम् ।

घटोत्कचः—कः प्रत्ययः ?

हिडिम्बाः—अयं प्रत्ययः । जयत्वार्यपुत्रः ।

भीमः—(विलोक्य) का पुनरियम् ? अये देवी हिडिम्बा !

हिडिम्बाः—उन्मत्तक ! अभिवादयस्व पितरम् ।

घटोत्कचः—तात ! अयमभिवादये ।

भीमः—पुत्र ! अतिबलपराक्रमो भव ।

घटोत्कचः—अनुगृहीतोऽस्मि ।

ब्राह्मणः—एवं भीमसेनपुत्रोऽयं घटोत्कचः ।

भीमः—पुत्र ! अभिवादयस्व भगवन्तं केशवदासम् ।

घटोत्कचः—भगवन्तमभिवादये ।

ब्राह्मणः—पितृसदृशगुणकीर्तिर्भव ।

घटोत्कचः—अनुगृहीतोऽस्मि ।

ब्राह्मणः—भो वृकोदर ! रक्षितमस्मत्कुलम् । गच्छामस्तावत् ।

भीमः—अदूरतोऽस्माकमाश्रमः । तत्र विश्रम्य गम्यताम् ।

ब्राह्मणः—कृतमातिथ्यमनेन जीवितप्रदानेन । तस्माद्
गच्छामस्तावत् ।

भीमः—गच्छतु भवान् सकुटुम्बः पुनर्दर्शनाय ।

ब्राह्मणः—बाढम् । प्रथमः कल्पः ।

भीमः—हिडिम्बे ! इतस्तावत् । वत्स घटोत्कच ! इतस्तावत् ।
तत्रभवन्तं केशवदासम् आश्रमपदद्वारमात्रमपि
संभावयिष्यामः ।

( निष्क्रान्ताः सर्वे )

———

## वेषस्य पूजा

वस्त्रेणैव पुमाँल्लोके पूजनीयतमो भवेत् ।
सूक्ष्मवस्त्रधरो विद्वान्धनिकेनाभ्यपूज्यत ॥

दरिद्रः कोऽपि विद्वान्कस्यचिद्धनिकस्य गृहं भोजनायाऽगच्छत् । जीर्णवस्त्रधारिणं तमवलोक्य धनिको वाचापि नोपाचरत् । अथ स विद्वान्स्ववस्त्रमेव तत्र कारणं मन्यमानः परेद्युः सूक्ष्मं निर्मलं च वस्त्रं परिधाय तस्यैव गृहं गतः धनिकस्तु प्रत्युत्थाय करेण तस्य करं गृहीत्वा धन्यवादेन तं सम्मानितवान् ।

पाद्यमाचमनीयं च दत्त्वा भोजनाय महानसमुपानयत् । विद्वांस्तु भोजनादौ स्वोत्तरीयं भूमौ प्रसार्य द्वित्रान्कवलांस्तत्र न्यक्षिपत् । तदवलोक्य धनिकः किमेवं क्रियते ? इति पण्डितमपृच्छत् । स तु बुद्धिमान् 'धनिक' पूर्वेद्युर्जीर्णमलिनवस्त्रधारी समागतोऽहम् । तदा वाङ्मात्रेणापि भवता न संमानितः । अद्य त्वस्य वाससः प्रभावेण बहूनां भवदीयसत्काराणां पात्रमभवम् । अतः कृतज्ञोऽहं वस्त्रमादौ भोजयामि । पश्चादहं भोक्ष्ये' इति । तच्छ्रुत्वा धनिकः किंचिदिव लज्जितोऽभवत् । साधु चेदमुच्यते—

वस्त्रेण वपुषा वाचा विद्यया विनयेन च ।
वकारैः पञ्चभिर्हीनो नरो नायाति गौरवम् ॥

---

## महादेवयशस्विसिंहसंवादः

राजपुत्रराजो यशस्विसिंहः पुण्यनगरशिविरान्तपट-भवनेऽन्यतमस्मिन् चिन्तानिमग्न आसीत्। तदा प्रतीहारः प्रविश्य सञ्जयध्वनि करौ सम्पुटीकृत्य प्रावोचत्—'देव, शिववीरप्रेषितो महादेवपण्डितो दिदृक्षतेऽत्रभवतः"। तदुर-रीकृत्य च "ओं प्रवेशय', इत्युक्तवति महाराजे प्रतीहारोऽपि तथाऽकरोत्। ततः प्रतीहारेण सह प्रविष्टमात्रे महादेवपण्डिते यशस्विसिंहः प्रणम्य आसनस्थानमुपवेशार्थं दक्षकरेण निर्दिष्टवान्। कुशलादिप्रश्नानन्तरं तयोरेवमभूदालापः।

यशस्विसिंहः—पण्डितवर! महाराष्ट्रराजस्य पत्रं तु प्राप्तवानेवास्मि, तदधिकं भवतः किं प्रस्तोतव्यमिति निरूप्यताम्।

महादेवः—महाराज! नाहं तत्रभवता किमपि प्रस्तोतुं प्रेषितोऽस्मि, अपि तु शोकं प्रकाशयितुम्।

यश०—तत् किं पुण्यनगरेण सह प्रधानश्चिकग-दुर्गोऽपि हारित इति शोकः।

महा०—तस्य हस्ते बहवो दुर्गाः सन्ति इति दुर्गार्थं न खिद्यते।

यश०—अथ किं दिल्लीश्वरेण सह युद्धरूपा महती-विपदुपातिष्ठत इति शोकः?

महा०—क्षत्रियराज! विपत्समये धीरतात्यागः शिवेन नाभ्यस्तः।

यश०—तत् किमिति शोकः, कथ्यतां कथ्यताम्।

महा०—भगवन्! यः क्षत्रियधुर्धरः येन राज्ञ-न्नतीर्यं भूः, योऽस्माद्यवनानामभिमानभाजनम्, यः सनातन-धर्मरक्षाया एकमात्रशरणम्, यश्च भारतीयवीरकुल-मुकुटमणिस्तमेवाद्य धर्मध्वंसिनामेतेषां यवनानां दासत्व-लाञ्छनमालोक्य शोकाकुलो महाराष्ट्रराजः। ततो यशस्विसिंहस्तु स्फुटमेव मां धिक्करोतीति किञ्चित् कुपितः, सतां तिरस्करणीयमेव भारतविद्रोहियवनवशवर्तिताकार्यं करोमीति ग्लानिः। तदा पुनरारभत तथैव वक्तुं महादेवः—"महाराज! स्वातन्त्र्यपोतकर्णधारस्य क्षत्रियकुलकमल-दिनेशस्य उदयपुराधीशश्रीप्रतापसिंहस्य कुलप्रसूत वीररत्नं यस्याद्धाङ्गम्, सिंहसंहननैः परःशतवीरवरैः सजय-जयध्वनि त्रियमाणं मरुदेशराजसिंहासनं पदा समाक्रम्य यो विराजते। एष दिल्लीकलङ्कोऽवरङ्गजीवोऽपि क्षिप्रातीरे यद्भुवाहुविक्रममवलोक्य क्षणमनिमेषो विस्मृतात्मदेहो विस्मितस्तस्थौ, सदैव यतो बिभेति, साहाय्यं च समपेक्षते, अस्मिन् विशालेऽस्मिन्नपि भारते वर्षे नगरे नगरे ग्रामे ग्रामे गृहे गृहे मन्दिरे मन्दिरे च यस्य क्षेमाय विजयाय बल-वृद्ध्यै शत्रुसमृद्ध्यै च द्विजवरा हस्तावुन्नमय्य सनामसं-कीर्तनमाशीराशीनुच्चारयन्ति, स एव महावीरः, स एव भारतरत्नम्, स एव राजकुलभूषणं यवनानां पक्षमवलम्ब्य स्वकीयानामेव शिरांस्युच्छेत्तुं सज्जितश्चानस्तीत्यवलोक्य क्षुब्धं महाराष्ट्रराजस्य हृदयम्।

यशस्विसिंहः किञ्चिल्लज्जया तिर्यग्वदनं विमनायमान-
मिवावलोक्य पुनः "वीरवर ! साधारणोऽहं दूतो, महाराजैः
सह कथमालपनीयमिति भाषणपरिपाटीमपि न जानामि,
कश्चिदपराधो मे चेत्क्षन्तव्यम्, किन्तु निरीक्ष्यताम्, किमर्थं यं
रणसज्जा ? किमिति भयानकभल्ला भासन्ते ? कस्मात्किन्तु-
मेते सादिनः ? कञ्च भस्मसात् कर्तुं एष भवत्कोपदावा-
नलः ? किं ये भवन्तमाशिषो वदन्ति, ये भवन्माहात्म्य-
श्रवणाकर्णनेन मोदन्ते, तेषामेव रुधिरेण मेदिनीं क्षालयितुं ? ये
भवन्तं निजकुलावतंसं मन्यन्ते तेषामेव वंशं ध्वंसयितुम् ?
ये निरर्थं दीनान् लुण्ठन्ति, कुलीनकन्या अपहरन्ति, मन्दि-
राणि निपातयन्ति, तानेव वैदिकमर्य्यादाविलोपनव्रतिनो
वैरिहतकान् वा खर्वयितुम् ? श्रीमति यन्निरर्थं स्वतन्त्रा
अपि प्रजा विजित्य केवलमविचारव्यभिचारात्याचार-
प्रचाराय धूर्त्तानामेषां यवनानां हस्ते समर्प्यन्ते इति
शोभते ? क्षत्रियव्याघ्र ! किमहं कथयामि स्वयमेव
विवेच्योऽयं विषयः।"

अथ कांश्चित्क्षणान् शिरः कण्डूयनेनैव यापयित्वा
किञ्चिद्धीरोऽपि लज्जां संवृण्वन्निव शनैरवादीत् महाराजः।

"दूतवर ! साधु ! तव भाषणशैलीमत्यन्तं प्रशंसामि।
न खलु अस्माभी राजपुत्रदेशीयक्षत्रियैर्भयेन वा लोभेन
वा यवनहस्तेषु आत्मा समर्पितः। अस्माभिरेव वारसहस्रं

यवनाः खड्गैः खण्डशः कृताः, अस्माभिरेव वारं वारं ते आसिन्धुकूलं विद्राविताः। न जानीमहे किमिवेहितं भगवत्या महामायया यद्वयं अनिच्छन्तोऽपि आत्मनस्तद्वस्तगतानेव पश्यामः। अधुना तु विस्तारेऽस्मिन्नपि राजपुत्रदेशे तेषां तथाधिकारोऽस्ति यत् केवलमात्मोच्छेदायैव तैः सह विरोधः स्यात्। इति किमिव क्रियेत। भाग्यैरेतेषां कदर्य्याणां परस्परमैक्यमपि नास्ति अस्माकं तद्यथोचितं निर्वहामः।

महा०—महाराज! मा स्म भूद्राजपुत्रदेशे तादृशं यवनाकीर्णं बलं परमस्मिन् देशे तु यवनानामधुनाऽपि दृढा प्रबलोऽधिकारो न संवृत्तोऽस्ति। युष्मदग्रे सर्वोऽपि-बद्धकरसम्पुटः, राज्यमेतदखिलं भावत्कं शिववीरोऽपि भवता स्ववसेनापतिष्वेवान्यतमोऽङ्गीक्रियताम्, दिल्लीश्वरेण च सह युद्धमारभ्यताम्। यः प्राप्तसिंहासनोऽपि विरूर्यादेव श्रीमन्तामतस्ततो सहायुद्धेषु सम्प्रेष्य श्रीमदनिष्टं शुश्रूषते, स सर्वथा दण्डेनैव शिक्षणीय आर्यैः। ऐक्यं नास्ति इति मा स्म भूच्छोकः, श्रीमताद्युद्योगेनैक्यमारभ्यताम्। शिवो भारतीयानां पारतन्त्र्यं नावलुलोकयिषति। राज्यलोभस्तु तस्य नास्ति इति, विजये राज्यमिदमपि अत्रभवतामेव भवेत्, किन्तु यथा भारतद्रुहां यवनानां प्राबल्येन प्रत्यहं धर्मलोपो न स्यात् तथैव शिवस्याभिप्रायः।

यश०—राज्यं तु अस्माकमपि वद्धन्ति। वयमपि लोभाभिभूता न स्मः। शिवस्योद्देश्यं चाखिलं प्रशस्य-मस्ति। किन्तु शिवस्य व्यापारेऽत्रैकमेवास्मभ्यं न रोचते, यदेष चौराणां लुण्ठकानां च वृत्तमनुसरति।

महा०—महाराज! मैवम्! किं कुत्रापि कुतश्चिदपि समश्रौषीच्छ्रीमान् यद् निरपराधान् पथिकान् लुण्ठति महाराष्ट्रराजः, आहोस्वित् कस्यापि भित्तिं भित्त्वा धनमप-जहार श्रीमान्। किन्तु लुण्ठकानामेषामत्याचारानपह-मानः लुण्ठकाः यथा न लुण्ठेयुस्तथैतान् दण्डयति। धर्मो हि सर्वथा रक्षणीयः। सतीत्वध्वंसनमन्दि-रावपातादिरूपो घोरतरो दुराचारः सर्वथा प्रतिरोद्धव्यः इति। क्वचन परवशतया नीतिविशेषस्यापि आश्रयोऽपेक्ष्यत इति किमियं लुण्ठकता? दिल्लीकलङ्कस्तु प्राधान्येन श्रीमन्तमेव द्वेष्टि। श्रीमताऽपि शठे शाठ्यमिति मुद्रया कूटनीतिरङ्गीक्रियेत चेत् किमियं लुण्ठकता स्यात्।

यश०—(दीर्घमुष्णं च निश्वस्य) अथ मां किम-भिदधाति शिवराजः।

महा०—महाराज! स श्रीमतः साहाय्यमभयं च वाञ्छति।

यश०—दूतवर! दिल्लीश्वरेण सह कृतप्रतिज्ञः कथ-

मन्यथा विनाशयामि। ( चिरं चिन्तयित्वा ) दिल्लीश्वरं

"महाराष्ट्रैः सह योत्स्ये" इति कथयित्वा समायातो ऽस्मि। तद् योत्स्ये।

महा०—"सत्यं योत्स्यते, स्ववंशजातानामेव क्षत्रियबालकानां वक्षश्छुरिकाभिर्विदारयिष्यते, ब्राह्मणरुधिरप्रवाहैर्वसुमती स्नपयिष्यते, यवनहस्तेषु अधिकारं समर्पयिष्यते। भगवन्! ये हि रोदं रोदं पादयोर्विलुठतामपि त्रायध्वं त्रायध्वमिति सहाहाकारचीत्कारैः रोदसीरोदयतामपि दारा अपहरन्ति, बालान् वृद्धांश्च सकष्टं घ्नन्ति, तेषामेषां दुर्विनीतानामाततायिनां बलेनापि छलेनापि च दण्डनं परमं पुण्यमेव; न पापम्। धर्ममर्मज्ञ! प्रार्थनामात्रमेवास्मादृशाणां कार्यम्, स्वीकारे तिरस्कारे च प्रभव एव प्रमाणम्।

यश०—पण्डित! भवादृशा वा भवादृशानां मन्त्रणा वा तिरस्करणीया न भवन्ति। शिवस्य सर्वोऽपि उद्देशो मह्यं रोचते, परं भवानेव विचारयतु प्रतिज्ञाविरुद्धाचरणं महतां कार्यं वा?

महा०—महाराज! यं भवान् दिल्लीश्वर इति ब्रूते तस्यैव राक्षसोचितानि कर्माणि दृश्यताम्। आत्मनो जननपोषणहेतुभूतस्य वृद्धस्य पितुः सावहेलं निगृह्य कारागारे स्थापनं महतां कार्यं वा? सोदर्याणां सच्छलं

सङ्कीर्णं मारणमीदृशो निर्दयाभिरपि सोद्दण्डभावं लज्जाना-
वहनं च महतां कार्यं वा ? केवलमार्यस्वभावानामार्यज-
नानामेव क्लेशनार्थं गोहिंसनं प्रतिमाखण्डनं हीनदीन
सनातनवैदिकधर्मशरणानामेवास्माकं करग्रहणं महतां कार्यं
वा, अन्तःस्थं किञ्चित्पुरातनं वैरं संस्मृत्य परतरयुद्धेऽत्र भवत
एव प्रेषणमभवदनिष्टचिन्तनं च महतां कार्यं वा ? यशस्वि-
शिवयोर्यतर एव महावीरो महाराष्ट्रयुद्धेऽस्मिन् क्षयिष्यते
ततर एव गिरिगुरुमहाभार इव भारतमहावीरः प्रशमिष्यति
इति विचार्यैव श्रीमतोऽत्र प्रेषणं महतां कार्यं वा ?

यश०— ( किञ्चिद्विचिन्त्य ) दूतवर ! तव वाग्मिता मां बलेन वाचंयमं विधत्ते । किन्तु शिवस्य वञ्चकता कर्ण-परम्परयाऽस्मद्देशेऽपि प्रतिगृहं प्रसृताऽस्ति, तत्कथमहमेतस्य प्रस्तावेषु विश्वसिमि ।

महा—(सक्रोधमिव) "महाराज, महाराज, खलु खलु क्षन्तव्यैवम् !! मा स्म सनातनधर्मैकशरणं महाराष्ट्रराजमेवं मिथ्याकलङ्कपङ्केनाङ्कय । को ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा तेन वञ्चितः ? म्लेच्छोऽप्येव वा सज्जनः कोऽवमानितः । अहह ! देव न शोभते युष्मादृशानां मुखादेवं कलङ्कनम्" इत्युक्तवत एव महादेवपण्डितस्य चक्षुषी बाष्पबिन्दुद्वयमु-द्गिरताम्, महादेवश्च पटप्रान्तेन प्रामार्ट् ।

यशः—तदाकस्मादेव महाराजस्यापि प्रेमपारावारसम्प्लव-

मिव हृदयं मुदितमिव च मनो बभूव। "पण्डित ! चम्भता-मद्यावधि मित्रं मे महाराष्ट्रराजः। साम्प्रतमहं तमालिलिङ्ग-षामि। तद् सपदि दर्शय तं क्षत्रियकुलावतंसम्" इति भाषितवान् मरुराजः।

महा०—अचिरादेव शिवः समुपस्थास्यते श्रीचरण-योरन्तिके।

अथ महादेवस्तु नम्रीभूय को जानीते किमपि तस्य कर्णे अचकथत्। यशस्विसिंहश्च तदाकर्ण्य सचकितं समफुल्लनयनं महादेवं निपुणं निरीक्ष्य ससम्भ्रमसमुत्थाय तथैवोत्थितं महादेवं बाहू प्रसार्य सानन्दं परिषस्वजे। तदनन्तर महादेवेन सहोपविश्य मुहूर्तं यावत् सगोपनं शनैः शनैर्बहु संललाप। महादेवस्तदा प्रतिनिवृत्सुरिव उदतिष्ठत्।

यश०—(द्वारसमीपं गत्वा) द्रष्टव्यम्, युद्धविषये यथालापो जातस्तथैव निवेदनीयः शिववीरः।

महादेवपण्डितो बाढमित्युक्त्वा प्रचलितः।

---

## चाणक्यसूत्राणि

१. सुखस्य मूलं धर्मः। २. धर्मस्य मूलं अर्थः। ३. अर्थस्य मूलं राज्यम्। ४. राज्यमूलमिन्द्रियजयः। ५. न कामासक्तस्य कार्यानुष्ठानम्। ६. अग्निदाहादपि विशिष्टं वाक्पारुष्यम्। ७. पूर्वं निश्चित्य पश्चात् कार्यमारभेत।

८. कार्यान्तरे दीर्घसूत्रता न कर्तव्या। ९. न चलचित्तस्य कार्यावाप्तिः। १०. कदाचिदपि चारित्रं न लङ्घयेत्। ११. गुणवदाश्रयान्निर्गुणोऽपि गुणवान् भवति। १२. कदापि पुरुषं नावमन्येत। १३. न दुर्जनैः सह संसर्गः कर्तव्यः। १४. मितभोजनं स्वास्थ्यम्। १५. तृष्णया मतिश्छाद्यते। १६. मूर्खेषु विवादो न कर्तव्यः। १७. धर्मेण धार्यते लोकः। १८. दया धर्मस्य जन्मभूमिः १९. व्यसनं मनागपि बाधते। २०. परद्रव्यं न हर्तव्यम्। २१. नास्त्यहंकारसमः शत्रुः। २२. म्लेच्छानामपि सुवृत्तं ग्राह्यम्। २३. अत्युपचारः शङ्कितव्यः। २४. आत्मच्छिद्रं न पश्यति, परच्छिद्रमेव पश्यति बालिशः। २५. श्वो मयूरादद्य कपोतो वरः। २६. सर्वं जयत्यक्रोधः। २७. तिलमात्रमप्युपकारं शैलमात्रं मन्यते साधुः। २८. परदारान् न गच्छेत्। २९. नास्ति सत्यात् परं तपः। ३०. अतिशूरो दानशूरः। ३१. यथा बीजं तथा निष्पत्तिः। ३२. आत्मा न स्तोतव्यः। ३३. न दिवा स्वप्नं कुर्यात्। ३४. अतिथिमभ्यागतं पूजयेत् यथाविधिः। ३५. सत्सङ्गः स्वर्गवासः। ३६. विश्वासघातिनो न निष्कृतिः। ३७ आश्रितदुःखम् आत्मन इव मन्यते साधुः। ३८. श्वः कार्यमद्य कुर्वीत।

---

## हल्दीघाटी

स्वाधीनताऽऽर्यभुवि मूर्तिमती समाना,
राणाप्रतापबलवीर्यविभासमाना।
आटीकते समुपमा नहि यां सुशोचिः—
शाटीव सा जयति काचन हल्दिघाटी ॥

आस्ते प्रताप इह भारतभूमिवीरः,
हे पान्थ ! हिन्दुरसि चेत्सकृदानतः स्याः।
सम्प्रत्यपि प्रतिवदन्निव किन्तु धीरं—
धीरं ह्यधीरयति धीरजनं समीरः ॥

मा कातराः ! स्पृशत मां प्रियपारतन्त्र्याः,
अद्यापि यत्र विहिता जननी स्वतन्त्रा।
यत्रेदमेव गदतीव ततिस्तरूणां—
शाखाकदम्बकृतमर्मरमातनोति ॥

"वीराग्रणीरभययुद्धकलाकलापी,
काऽऽस्तेऽद्य हा ! तनयः सनयः प्रतापी"।
अत्रत्यनिर्जनवनेऽथ यदा कदाचित्,
मातेव रोदिति सखे कुररी नु काचित् ॥

अद्यापि यत्र जननी मम हन्त 'राणा',
'राणा' विरौति विकला नु 'कुहू' च्छलेन।
अद्यापि धारयति नैव कदापि शोभां
मूनञ्च तद्विरहिणी प्रकृतिर्वधूटी ॥

अद्यापि यत्र सुमधुरकलकूजितानि,
लोलाक्षखञ्जनजनाञ्चितनर्तनानि ।
सत्कूजितान्यनुदिनं शुकशावकानां,
तौर्यत्रिकं जयति किञ्चन देवतानाम् ॥
पुष्पं फलं तदनु गन्धवहः समीरः,
खद्योतपंक्तिरमला च पिकालिगीतिः ।
अद्यापि यत्र सरलप्रकृतिप्रणीतं,
पञ्चोपचारमिव पूजनमस्ति मातुः ॥
नीलेन पत्रनिवहेन सदाहसन्तः,
पक्त्वा फलानि विमलानि समश्नुवन्तः ।
'श्रीराम'नाम मधुरं मधुरं क्वणन्तः,
अद्यापि यत्र सुशुका विलसन्ति सन्तः ॥
चूडामणिः सकलभारतभामिनीनां,
पत्नी प्रतापनृपतेरमलाऽत्र शैले ।
प्राणप्रदानमकरोत् पतिपादपद्मे —
किन्त्वेकवारमपि हा ! नहि 'हा'ऽकरोत्सा ॥
अत्रैव वीरजनमौलिमहार्हरत्नं,
धीराग्रणीरगणितव्रणवान् स 'झाला' ।
राणाऽर्थमेव हहहा ! समरोऽसहायः
प्राणाञ्जहौ न तु पलायनतत्परोऽभूत् ॥

लोकत्रयेऽतिविदिता बलिवेदिकेयं,
यत्र प्रतापनृपतेरनुयायिवर्गः ।
सङ्क्रीतवान्, किल परश्शतमौलिदानात्,
स्वातन्त्र्यमायंत्ररवीरवसुन्धरायाः ॥
वीराश्चतुर्दशसहस्रमिता इहैव
मृत्युं यथा शयनतूलमथाऽऽलिलिङ्गुः ।
किन्तु प्रशस्यतमशस्यमहीयसीं स्वां,
सन्मातरं नहि मनाग् विजहुर्धरित्रीम् ॥
अत्रैव वीरजनशोणितशोणगङ्गा,
भूत्वा सहस्रपथगा गतिमाततान ।
यद्दर्शनेन रसनेन च मज्जनेन
देवैः सहैव ऋषयः पितरोऽपि तृप्ताः ॥
सैषा स्थली चकितचेतकचङ्क्रमाणां,
सैषा स्थली कुटिलकुन्तपराक्रमाणां ।
सैषा स्थली प्रियतमाऽप्यसुतोऽमराणां,
सैषा स्थली ज्वरकरी नरपामराणाम् ॥

---

## भासुरकसिंहकथा

कस्मिँश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म । अथासौ वीर्यातिरेकान्नित्यमेवानेकान् मृगशशकादीन् व्यापादयन्नोपरराम । अथान्येद्युस्तद्वनजाः सर्वे सारङ्गवराह-

महिषशशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः । स्वामिन् ! किमनेन सकलमृगवधेन । नित्यमेव यतस्तवैकेनापि मृगेण तृप्तिर्भवति । तत्क्रियतामस्माभिः सह समयधर्मः । अद्य प्रभृति तवात्रोपविष्टस्य जातिक्रमेण प्रतिदिनमेको मृगो भक्षणार्थं समेष्यति । एवं कृते तव तावत्प्राणयात्रा क्लेशं विनापि भविष्यति, अस्माकं च पुनः सर्वोच्छेदनं न स्यात् । तदेष राजधर्मोऽनुष्ठीयतामिति ।

अथ तेषां तद्वचनमाकर्ण्य भासुरक आह । अहो ! सत्यमभिहितं भवद्भिः । परं यदि ममोपविष्टस्यात्र नित्यमेव नैको मृगः समागमिष्यति,तन्नूनं सर्वानपि भक्षयिष्यामि । अथ ते तथैव प्रतिज्ञाय निर्वृतिभाजः तत्रैव वने निर्भयाः पर्यटन्ति । एकश्च प्रतिदिनं वारक्रमेण याति । वृद्धो वा वैराग्ययुक्तो वा शोकग्रस्तो वा पुत्रकलत्रनाशभीतो वा तेषां मध्यात्तस्य भोजनार्थं मध्याह्नसमय उपतिष्ठते । अथ कदाचि-ज्जातिक्रमाच्छशकस्य वासरः समायातः । स समस्तमृगैः प्रेरितोऽनिच्छन्नपि मन्दं मन्दं गत्वा तस्य वधोपायं चिन्तयन् वेलातिक्रमं कृत्वा व्याकुलितहृदयो यावद्गच्छति तावन्मार्गे गच्छता तेन कूपः संदृष्टः । यावत् कूपोपरि याति, तावत् कूप-मध्य आत्मनः प्रतिबिम्बं ददर्श । दृष्ट्वा च तेन हृदये चिन्तितम्, यद्भव्य उपायोऽस्ति । अहं भासुरकं प्रकोप्य स्वबुद्धयास्मिन् कूपे पातयिष्यामि । अथासौ दिनशेषे भासुरकसमीपे प्राप्तः ।

सिंहोऽपि वेलातिक्रमेण क्षुत्क्षामकण्ठः कोपाविष्टः सृक्कणी परिलेलिहानः व्यचिन्तयत्। अहो प्रातराशाय निस्सत्त्वं वनं मया कर्त्तव्यम्। एवं चिन्तयतस्तस्य शशको मन्दं मन्दं गत्वा प्रणम्य तस्याग्रे स्थितः। अथ प्रज्वलितात्मा भासुरकस्तं भर्त्सयन्नाह—रे शशकाधम ! एकतस्तावत्त्वं लघुः प्राप्तोऽपरतो वेलातिक्रमेण। तदस्मादपराधात्त्वान्निपात्य प्रातः सकलान्यपि मृगाकुलान्युच्छेदयिष्यामि। अथ शशकः सविनयं प्रोवाच। स्वामिन्नापराधो मम न च सत्त्वानां, तच्छ्रूयतां कारणम्। सिंह आह सत्वरं निवेदय। यावन्मम दंष्ट्रान्तर्गतो न भवान् भविष्यतीति। शशक आह। स्वामिन् ! समस्तमृगैरद्य जातिक्रमेण मम लघुतरस्य प्रस्तावं विज्ञायाहं पञ्चशशकैः समं प्रेषितः। ततश्चाहमागच्छन्नन्तराले महता केनचिदपरेण सिंहेन विवरान्निर्गत्याभिहितः। रे क्व प्रस्थिता यूयम् ? अभीष्टदेवतां स्मरत। ततो मयाभिहितं, वयं वनस्वामिनो भासुरकसिंहस्य सकाशमाहारार्थं समयधर्मेण गच्छामः। ततस्तेनाभिहितम्। यद्येवं तर्हि मदीयमेतद्वनं मया सह समयधर्मेण समस्तैरपि मृगैर्वर्तितव्यम्, चौरः स भासुरकः। अथ यदि सोऽत्र वने राजा तर्हि विश्वासस्थाने चतुरः शशकानत्र धृत्वा तमाहूय द्रुततरमागच्छ। येन यः कश्चिदावयोर्मध्यात्पराक्रमेण राजा भविष्यति स सर्वानेतान्भक्षयिष्यतीति। ततोऽहं

तेनादिष्टः स्वामिसकाशमभ्यागतः । एतद्वेलातिक्रमकारणम् । तदत्र स्वामी प्रमाणम् तच्छ्रुत्वा भासुरक आह—भद्र ! यद्येवं तर्हि सत्वरं दर्शय मे तं चौरसिंहं येनाहं मृगकोपं तस्योपरि क्षिप्त्वा स्वस्थो भवामि । शशक आह । अस्त्येतत्तथापि बलवान् स मया दृष्टस्तन्न युज्यते स्वामिनस्तस्य सामर्थ्यमविदित्वा गन्तुम् ।

भासुरक आह—भोः किं तवानेन व्यापारेण, दर्शय मे तं दुर्गस्थमपि । अथ शशक आह । यद्येवं तर्ह्यागच्छतु स्वामी । एवमुक्त्वाग्रे व्यवस्थितः । ततश्च तेनागच्छता यः कूपो दृष्टोऽभूत् तमेव कूपमासाद्य भासुरकमाह । स्वामिन् ! कस्ते प्रतापं सोढुं समर्थः, त्वां दृष्ट्वा दूरतोऽपि चौरसिंहः प्रविष्टः स्वदुर्गं, तदागच्छ येन दर्शयामि । भासुरक आह दर्शय मे दुर्गं, तदनु दर्शितस्तेन कूपः । ततस्सोऽपि मूर्खसिंहः कूपमध्य आत्मप्रतिबिम्बं जलमध्यगतं दृष्ट्वा सिंहनादं मुमोच । ततः प्रतिशब्देन कूपमध्याद् द्विगुणतरो नादः समुत्थितः । अथ तेन तं शत्रुं मत्वात्मानं तस्योपरि प्रक्षिप्य प्राणाः परित्यक्ताः । शशकोऽपि हृष्टमनाः सर्वमृगानानन्द्य तैः सह प्रशस्यमानो यथासुखं तत्र वने निवसति स्म ।

## आल्हा

चन्देलनृपाणामन्तिमः परमारदेवो नाम राजा बभूव। साम्प्रतं महोबानाम्ना प्रसिद्धे नगरे तस्य राजधानी समभवत्। दुर्बलः परमारदेव इति हस्तिनापुरकान्यकुब्जाधीश्वराभ्यां स निकामं निपीड़ितोऽभवत्। आल्हाऊदलश्च तस्य राज्ञः सभासदावभवताम्। बाल्य एव मृतपितृकाविमौ राज्ञा परमारदेवेनैव पोषितावभवताम्। परमारदेवमहिषी मालहनदेवी पुत्रवदिमावपालयत्। अनयोः पितुर्जसराज इति नामासीत्। स हि कस्मिन्नपि समरे वीरगतिं प्राप। ततः परमारदेवेनैवानयोः पितृकृत्यं निर्वर्तितमभवत्। क्रमेण वयस्थाविमौ सूर्यचन्द्रमसाविवात्मनः कीर्त्तिं प्रसारयामासतुः। तदा महोबानगरं प्रसिद्धमभवद् वीर्यातिशयेन। अनयोः प्रतापसूर्यो नभो मध्यमारूढः प्रतपतिस्मारातीन्। अयोध्या-महोबाधीशवाहिनी, को वा शक्तस्तत्सम्मुखे क्षणमपि स्थातुम्। आल्हा-ऊदलश्च समुपकृतौ राज्ञा, अनयोर्विवाहो राज्ञैव स्वव्ययेन सम्पादितः, राज्ञी च पुत्रनिर्विशेषमिमौ पश्यतिस्म। अतश्चानयोरपिराजकुले महती भक्तिरजायत। राजरक्षार्थे प्राणानपि सुखेन समुत्स्रष्टुं कृतप्रतिज्ञाविमाववर्तताम्। आल्हाऊदलप्रतिमो वीरो यस्य वशे तिष्ठति तं सर्वोऽपि-

प्राणरक्षार्थी जनः प्रक्रमेदेव । अतश्चापरे सर्वे राजानः परमारदेवं श्रद्धया सम्मानयितुमुपचक्रमुः । पुनः प्रवृद्धा प्रतिपत्तिर्महोवाराज्यस्य । तत्रत्यः चीणश्चन्द्रः कलाभिः पूर्णो दिगन्तानुद्भासयितुं प्रवृत्तः ।

तयोः सर्वदा समरप्रवृत्तयोरेव समयोऽत्यवर्तत । तदा हि भारते सर्वतः प्रज्वलित आसीत्समराग्निः । ततः एव च वीराः सम्मान्यन्ते । तदा प्रत्यायर्ण खड्गझणत्कारोऽश्रूयत । तदा कन्याजन्म महदनिष्टकरमित्यमन्यत । यतः कन्याविवाहावसरे समरो दुर्निवार आसीत् । तस्मिन्नेव काले आल्हाऊदलौ च जन्माधिजग्मतुः । विलासप्रचुरे काले वीराणामादरो ननु स्वाभाविक एव । राजानो विलासपरा,प्रजाश्च तदनुगाः । को नाम न्यायः,को नाम सदाचार इति न कोऽपि विजानातिस्म । एतादृशाणामाचाराणां यादृशः परिणामो भवति, तादृशो ननु जात एव ।

( २ )

आल्हामातुलो माहलजी आसीत् । तस्य हि विलक्षणा प्रकृतिर्न कस्यापि योग्यस्य सम्यदुत्कर्षं मनसापि सोढुं शक्नोति । महोवाप्रदेशे दिने दिने प्रसरन्तीमाल्हाऊदलयोर्यशोवल्लरीं निरीक्ष्य माहलजीमहोदयस्तां मूलत उच्छेत्तुं प्रयत्नमारचयत् । परं माहलस्यायं प्रयत्न एव तयोर्यशोवर्द्धनमन्त्रः संवृत्तः । माहलेन सर्वत्र आल्हाऊदलयोर्निन्दा

प्रचारिता। कदाचिदयं राजसभामगच्छत्। तत्र न सन्निहिता-
वभवतामाल्हाऊदलश्च। राजसभां प्रविष्टो माहलः शोका-
क्रान्तमिवात्मनो मुखमण्डलं व्यधात्। तथाविधं तं दृष्ट्वा
राजा प्रोवाच—मातुल! कथं शोकाक्रान्तमिवाद्य भवन्तं लक्ष-
यामि। राजवचनमाकर्ण्यैव माहलस्य नेत्रेऽश्रुप्लुतेऽ-
भूताम्। कपटप्रबन्धकुशलानां स्वमनोवृत्तिषु यावानधिकारो
न तावान् योगाभ्यासवशीकृतेन्द्रियग्रामस्य मानवसिंहस्यापि।
तेषां हृदयं शोकाकुलं वा भवेत्, परमोष्ठे स्मितरेखा विलो-
क्यते। मनः प्रसन्नम्, नेत्राभ्यामश्रुप्रवाहो निर्गच्छति। मनसि-
प्रज्वलति मत्सरानलः परं वाक्सुधारससहोदरा विनिःसरति।
माहलोनृपमवदत्। महाराज! भवत्पाणिपल्लवलालितस्य
जनस्यास्य नावशिष्टाः केऽपि मनोरथाः। परं भवदाश्रयप्रवृद्धो
जनः प्रत्यर्घ्यं निवापाञ्जलिं तेभ्यस्तेभ्यो भवदुपकारेभ्यः
साम्प्रतं भवद्विषय एव कपटं कर्तुमुद्यत इति ज्ञात्वा नितरां
चिन्ताक्रान्तोऽस्मि सञ्जातः। परमारदेवोऽपृच्छत्, अपि
ममाभ्युष्टेषु जनेष्वस्ति कश्चिदेवंविधः? माहलोऽवदत्देव!
अहमेव। राजा चकितोऽपृच्छत्—अपि भवान्? माहलः
प्रत्यवोचत्, महाराज! किमिव ब्रवीमि, कृपापारावारे
भवद्धृदये कोऽपि निष्कः प्रविष्टः, मद्भागिनेय आल्हा।
तस्य ननु राजापचारो मदीय एव भवति। राजा किञ्चित्
विषण्ण इवावदत्। आल्हा पुत्रसमो मे। महता कष्टेन मया

548/05



लितः । स किमद्य मय्यपचारं रचयति । नात्र विषये कथमपि विश्वासमाधातुं शक्नोमि । माहलो महाराजसमीपमुपसृत्य किञ्चित् कर्णे कथयति ।

( ३ )

आल्हाऊदलप्रभृतयो बहवो तुरगसञ्चालनशिक्षाभ्यास-प्रवृत्तौ साम्प्रतम्, उपस्थितास्तत्र बहवः प्रेक्षकाः । अत्रान्तरे कञ्चुकिरागत्य राजाह्वानमश्रावयत् । महाराजस्याकाण्डाह्वानं श्रुत्वा आल्हा किञ्चिदिव भीतः सञ्जातः किन्निमित्तमद्य महाराज आह्वयति । परित्यज्याश्वसञ्चालनं तौ राजसभां प्रस्थितौ । प्रेक्षकाश्च परस्परं समालपन्तः स्वस्वगृहं जग्मुः । राजानमुपसृत्य वीरसरण्या प्रणम्य च तौ यथास्थानं निषीदतुः । राजा प्रोवाच, मत्प्रार्थितं युवाभ्यां प्रदास्यते । को नियोगोऽनुष्ठेय इति आल्हा सादरं सविनयञ्च प्रत्यभाषत । महाराज ! आल्हा नकारप्रदानेऽसमर्थः सर्वथा । यतो नकार-प्रदानं क्षात्रधर्मविरुद्धमित्युक्त्वा स्वमातुलं वक्रितग्रीवो व्यलोकयत् । अनेनैव कोऽपि कपटो विरचित इति निरधार-यच्च । आल्हा पुनर्नृपमुवाच । अयं महाराजस्य प्रश्नक्रमो निपातयति जनममुं सन्देहसागरे । अनभ्यस्तोऽयं जन एवं विधानां वाचां श्रवणे । यथेच्छमाज्ञाप्यताम् । भवदाज्ञया ज्वलज्जटाल-मग्निमध्यं लङ्घयितुमहं समुद्युक्तः, मृत्योरपि प्रतिभटो भवितुं सन्नद्धः । राजा तमुवाच, ममापि त्वय्येवंविध एव

विश्वासः। आस्ताम्, नाहत्रनामकोऽश्वस्त्वया प्रदेयो मह्यम्। श्रुत्वैतद्राजवचनं आल्हा परं विषण्णोऽभवत्। कथमियं राजाज्ञा पालनीया। राजक्रोधो गणितश्चेत् क्षात्रधर्मो ननु कथं तिरस्करणीयो नकारप्रदानेन। महान् मयि राज्ञउपकारः परं धर्मविरुद्धं राजवचनं कथन्नाम मानयितव्यं भवेत् केनापि क्षत्रियवीरेण? इदं शरीरं पालितं महाराजेन तत्सुखेन त्यक्त्वा तदानृण्यं गन्तुकामोऽस्मि धर्मस्तु सर्वात्मना परिरक्ष्य एव। शस्त्रमश्वश्चेति द्वावेव क्षत्रियस्य बाह्यप्राणभूतौ। इमावेवाधिष्ठाय क्षात्रधर्मस्तिष्ठति। तत् किमिदानीं कर्तव्यम्। राज्ञामप्युपकृतमिति सत्यम्, परं मयापि राजसेवा कृतैव। कति वा नापदः सोढाः मया राजसेवाकृते। साम्प्रतं तत्सर्वमेकपद एव विस्मृत्य राजा मां धर्मच्युतं कर्तुमुद्यतः। अशक्यं साम्प्रतं राजाज्ञापालनम्। आल्हा इत्थं बहु विचिन्त्य निक्षिप्य च क्रोधारुणलोचने माहलदेवे धीरं वक्तुमुपाक्रमत। असमर्थोऽस्मि राजाज्ञापालने। परमारदेवोऽवदत् किं ममोपकाराणामियं प्रत्युपक्रिया। इयं पदवी मत्कृपयैव श्रीमद्भिः प्राप्ता। आल्हा प्रत्यवोचत्, महाराज! जानामि, सर्वं जानामि। परं प्रत्युपकारतोऽपि क्षात्रधर्मपालनं महद् विजानामि। धर्मविरुद्धं राजवचनं न कथमपि मान्यं भवति, शरीरं पालितं देवेन, तत्तु सज्जमेव देवकार्येषु, धर्मविरुद्धं चेष्टितुमपि नाहमात्मानं समर्थं भावये। माहलवचने राज्ञः परमो

निरवासो जातः। आन्हा च राजानं प्रणम्योवाच, बालिशत्वान्मम येऽपराधाः सञ्जातास्ते ननु श्रीमद्भिः क्षन्तव्या महाराजैः। साम्प्रतमत्र क्षणमपि स्थातुं न शक्नोमि। इत्यमुक्त्वा राजसभातो सहोदलेन निष्क्रामन् आल्हा माहलदेवमवदत्, काले भवताप्येतत्फलमनुभवनीयमेव।

( ४ )

आल्हाऽऊदलयोर्माता देवलदेवी। क्षात्रेण तेजसा समुद्भासितमासीदस्या हृदयम्। धर्मपालनाय राजानमपि तृणाय मत्वा अनयोः पुत्रयोः शिरसि करं निधाय वाष्पव्याकुललोचनाऽवदत्—वत्सौ, युवाभ्यामद्याहं जननीकृता,पालितो धर्म एव श्रेयः सूते। रुष्टो नृपो न किमप्यनिष्टं कर्तुं शक्तः। तत्कृतोऽनिष्टो ननु प्रतिविधातुं शक्यः।

मात्रा प्रशंसितावादाय च तां महोवानगरात् खड्गसहायौ तौ निष्क्रान्तौ। किमिवान्यदपेक्षितं वीरस्य। तदासीद् वर्षासमयः, नद्यः प्रवृद्धाः, राजसम्मानिताः खला इव कमप्युद्वेगं जनयामासुः। पथिकानाम् वारवधूचित्तमिव सुरेन्द्रचापं क्षणेक्षणे वर्णान्तरमादधार। जलधरधारासिक्ताः पथिकाः कामपि वेदनामन्वभवन्। वारिवाहव्यतिकरशिशिरा ववुश्च परितः प्रावृषेण्या समीराः। केकिनां केकास्तरुशिखरेषु सम्मूर्छिता काममप्युन्मादनामजनयन् जीवलोकस्य। कृषीवलकन्यकास्तरुच्छायानिषादिन्यः सपरितोषं जगुः। हरिन्मणि-

भिरास्तीर्णा पर्वतानामधित्यकाः, स्फटिकसमानैर्मांसमानैः पतद्भिर्निर्झरैः नवप्रभाभिर्विविधाभिर्वल्लीभिश्च कापि शोभा अलक्ष्यत प्रकृतिदेव्याः ।

साम्प्रतं सर्वे सुखिनः । सर्वे च गृहे निषण्णाः शोभां पश्यन्ति वर्षासमयस्य । ईदृशे समये न कोऽपि गृहाद् बहिः पदमपिगन्तुमिच्छति । कालविडम्बित एव वर्षासु स्थानमेकं परित्यज्य स्थानान्तरमाश्रयितुं चेष्टते । अयं समयो मात्रा सह आल्हाऊदलयोर्जन्मभूमिपरित्यागस्य । तेषां तदानीन्तनीं हृदयावस्थां वर्णयितुं को वा प्रभुर्भवति । यत्र बाल्यं नीतं, यस्याः रक्षार्थे प्राणा अपि पणीकृता,हा,अद्य सैव परित्यज्यते, कं वा न दुःखीकरोति जनं मातृभूमिपरित्यागः । रुष्टा वयं-गच्छाम इति कदाचिद्राजा परावर्तयितुमस्मान् प्रेषयेत् कमपी-त्याशया संयमिताः वल्गाः अश्वानां,येन तेषां वेगो मन्दीभूतः। प्रकृत्या अवृद्धं शोकावेगं कथञ्चन हृदि निरुध्य प्रचलितास्ते ।

गुणग्राहकाः सर्वत्र सदा समुपलभ्यन्ते, एकेन मूर्खेण दुर्दैवोपहतेन बहु तिरस्कृतो गुणी, अपरेण विचारवता सत्क्रियते । आल्हाऊदलौ महोबातो निर्वासितौ । देशान्तरं गन्तुं प्रवृत्ताविति समाचारमुपलभ्य बहवो नृपास्ता-वानेतुं स्वभृत्यान् प्रेषयामासुः। तेषु कान्यकुब्जाधीश्वरस्य जय-चन्द्रस्य कुमारोप्यासीत् । राजकुमारेण प्रेम्णा गृहीतौ तौ कान्यकुब्जनगरं प्रतीयतुः । तत्र महाराजेन सम्मानितौ कृता-

-र्थनौ परां प्रीतिमीयतुः। राजा जयचन्द्रो हि तमात्मनः सेनापतित्वेऽभ्यषेचयत्।

विरहितसूर्यं मेरोः प्रदेशं बलीयसा अन्धकारेण समावृतं भवति। आल्हाऊदलाभ्यां विरहितं महोबानगरपरैर्माण्डलिकराजभिराक्रान्तुं प्रयत्नोऽकारि। अस्मिन्नेवावसरे पृथ्वीराजसेना कुतश्चित् परावर्तमाना मध्ये मार्गं महोबानगरतोऽनतिदूरं विश्रामं गृहीतवती। सैनिकानां कीदृशः स्वभाव इति नाविदितं कस्यापि। निष्कारणमेव चन्देलचौहानसैनिकाः परस्परं न्ययुध्यन्। चौहानसैनिकाः स्वल्पाः इति ते पराजिता परमेण क्रोधेन जगज्जिघत्सितुमिव प्रवृत्ताः कथं कथमपि राजधानीं आपुः। निवेदयामासुश्च सकलं वृत्तं यथावद्राज्ञे पृथ्वीराजाय न कोऽपि वीरो महाराज! आत्मनः सैनिकावमानं मृष्यति। पृथ्वीराजेन सेनां सज्जीकरणाय आज्ञप्ताः सेनापतयः ततश्च समये पृथ्वीराजः सेनासमेतो महोबाभिमुखं प्रतस्थे। आसाद्य महोबासमीपस्थानं चौहानसेनानिवेशः स्थापितोऽभवत्, प्रदेशवर्तिनो ग्रामाश्च तैर्लुण्ठिता निर्दयम्

चन्देलसेना चौहानसेनाभिमुखं प्रस्थिता। जातं उभयोः प्रथमः सम्मर्दः। परं चन्देलसेना पराजिताभवत्। साम्प्रतं परमारदेवस्य चक्षुरुन्मीलितम्। आल्हाउदलयोरभागो नितरामतुदत्तम्। परं साम्प्रतमनुचिता चिन्ता सा। उपायान्तराभावे

सेनासज्जीकरणाय मासावसानोऽवधिश्चन्देलराजेन याचितः। पृथ्वीराजेन च तदीया प्रार्थना स्वीकृता। चौहानराजो नियमान् प्रतिज्ञाश्च सम्यग् पालयति। एतेन प्रतिज्ञापालनदोषेण गुणेन वा कति ना दुःखानि नानुभूतवानयं तथापि प्रतिज्ञापालनं व्रतं नामुञ्चत्। मासावधिमयं पालयिष्यत्येवेति विगतसन्देहः संवृत्तश्चन्देलभूभुजः।

मासावधिमधिगत्य चन्देलभूपः परमारदेवो मन्त्रणाय सभां समाहूतवान्। तत्र राज्ञी अपि सन्निहिताऽभवत्। ततः केनाप्युक्तम्। इतः स्थानान्तराश्रयणमेव साम्प्रतं युक्तम्, अपरेण केनचिदुक्तम्, नगरं परितो दृढा परिखा विधेया। राजा स्थाणुरिव तुष्णीं तिष्ठति। अत्रावसरे राज्ञी प्रोवाच, हन्त वीराणां युष्माकमियं वाक् यैः पूर्वं समर्जिता पराक्रमेण विजयलक्ष्मीः साम्प्रतं त एव स्थानान्तराश्रयणं मन्त्रयन्ति। क्व गतं युष्माकमिदानीममन्दं तपोजः। सर्वानेव वीरान् साम्प्रतमपि पुरःस्थितान् पश्यामि, तथापि श्रीमन्तः पुरेव न विजयश्रिया प्रदीप्तमुखाः विलोक्यन्ते। मन्ये, सा देवलदेव्यपराभिधाना सा विजयश्री रुष्टा अस्मान् विहाय गतेति। ननु सैव प्रथमं प्रसादनीया। आल्हाऊदलौ यथा भवेत्तथा-समानेतव्यौ। राज्ञा कथितं सर्वैरेव ससाधुवादं स्वीकृतमभवत्।

जगन्नाथनामकश्चारणः प्रेषितोऽभवत् कान्यकुब्ज-नगरादाल्हाऊदलयोरानयनाय। यथासमयं सम्प्राप्तो जगन्नाथः कान्यकुब्जनगरम्, साक्षाच्चकार च चन्देलवीरम्। विषएर्णं जगन्नाथं दृष्ट्वा आल्हा प्रोवाच—कवीश्वर, विस्मृतवानसिमार्ग-मिति प्रतीयते, कथमद्य किञ्चनाविमौ स्मृतिपथमागतौ। श्रुत्वैतदाप्लुता समभवज्जगन्नाथस्य दृष्टिरश्रुपूरेण। अव-दच्च स आयुष्मन् न शुभेऽवसरे स्मर्यन्ते देवताः। अधुना महोत्रानगरं विधातृरोषानलनिपतितं भस्मसाद्भवति, न कोऽपि रक्षिता साम्प्रतं तत्रत्यानाम्। पृथ्वीराजसेनया संरुद्धं नगरं महति दुःखे निमज्जति।

साम्प्रतं चन्देलराष्ट्रं नामशेषतां गन्तुमिव प्रवृत्तम्। विलीना नयनरमणीया सा श्रीः क्वापि, दुष्प्रेक्ष्यतामिदानीं यातं तन्नगरं प्रेक्षकाणाम्। विरलान्यत्र दृश्यन्ते विवृतद्वाराणि गृहाणि। "हा हताः स्मः, हा निरवलम्बाः स्मः, वत्स! पश्य शोकविह्वलां मातरम्, नाथ! त्वदेकजीवितां दासीमपहाय क्व प्रयासि, चिरायान्तर्हितो मे सखा, एवंविधा आर्तनादास्तत्र प्रतिगृहं श्रूयन्ते। पृथ्वीराजेनेमां दशां गमितास्मः। भूयो-भूयो याच्यमानेन तेन मासावधिः प्रदत्तः। ततः परं युद्धः प्रचलिष्यति। महाराजेन श्रीमत्समीपं प्रेषितोऽभवम्। वीरः भवानेव शरणमिति कृत्वा महाराजेनाहमद्य प्रेषितः।

अतस्त्वयैवा सहानुजेनायुष्मता, रक्षणीया मर्यादा चन्देल-नृपाणां। भवदागमनान्तरं महतीं दुरवस्थामनुभवति राज्ञा-परमारदेवेन सह चन्देलराष्ट्रम्। बाल्ये युवाभ्यां य उपभोगा-स्तत्र भवद्भ्यां भुक्तास्ते ननु साम्प्रतं स्मरणीयाः। अलंकृता भवतु वःरवालेन भवतो हस्तमुष्टिः। त्वरितमेव ते मुखचन्द्रमाः समुदेतु महोत्रा नभोमण्डले। अन्यथा सर्वथान्धकारकवलितमेव तद्राष्ट्रं भविष्यतीत्यवधेहि।

आल्हा किञ्चिदिव वक्रितग्रीवः प्रोवाच, जगन्नाथ! अस्थानेऽयमनुरोधस्तव महाराजस्य च, अस्माकं यत्कर्तव्यं तन्निर्वृत्तमेवेतिमन्ये। महाराजेनोपकृतावावामित्यत्र नास्ति-सन्देहः। परं मम जनकेन तस्यैव कृते प्राणा अपि परित्यक्ता इति न विस्मर्तव्यम्। मयैव वा महता प्रयत्नेनाराधितोऽपि महाराजः पराङ्मुख संवृत्तः। मत्प्रतापात् बहवो नृपाः करदीभूताः संवृत्ता महाराजस्य, प्राणानपेक्षमाराधितो महाराज आवाभ्याम्, तथापि महाराजेनावां राजधानीतो निष्कासितौ। क्षत्रियो न द्विर्भाषते अतश्चमहाराजस्याह्वानं मम च तत्र गमन-मेतद्द्वयमप्यशोभनमिति मन्ये। जगन्नाथोऽभाषत, अयुक्त-मिदं क्षत्रियस्य तव वचनम्। नहि कोऽपि क्षत्रियः शत्रुसमा-क्रान्तां मातृभूमिमुपेक्षते। किञ्च यस्यास्त्राणाय तव पिता सभ्रातृकस्त्वमपि महान्तं परिश्रममङ्गीकृतवान्। तस्या

एतदवधोपेक्षणं नितरां खेदयत्यस्मान् । सङ्कटपतित मातृभूमिमुपेक्ष्य यः क्षत्रियोऽन्यत्र पिण्डपालितो भवति तस्य नरकेऽपि नास्ति स्थानमिति वदन्ति पूर्वे। आयुष्मन्, भूते न भवति विश्वासो वीराणाम्, उद्धर मातृभूमिम् ।

